THE

# CHOWKHAMBÂ SANSKṚIT SERIEṢ;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS. 70, 185 & 209.

# ब्रह्मसूत्रभाष्यम् ।

श्री भा स्क रा चा र्य वि र चि त म् ।

## BRAHMASÛTRA

WITH

A COMMENTARY BY BHÂSKARÂCHÂRYA.

EDITED BY

*Pandit Vindhyesvarî Prasâda Dvivedin,*
Librarian, Government Sanskrit College,
BENARES.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT BOOK-DEPOT. BENARES.
AGENTS:-
OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.

1915.

॥ श्रीः ॥

ॐ नमः परमात्मने ।

---

श्रीभास्कराचार्यविरचितस्य

# शारीरकमीमांसाभाष्यस्य

## भूमिका ।

---

श्रीशङ्कराचार्यरामानुजाचार्यमध्वाचार्यप्रणीतशारीरकमीमांसाभाष्येभ्यः प्राचीनं तद्भाष्यमन्विष्यता मया श्रीमद्गुरुभिः पठ्यमानमिदं पद्यं भास्कराचार्यकृतभाष्यस्य महती प्रशंसा च श्रुता

"सूत्राभिप्रायसंवृत्त्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये ॥" इति

तदनन्तरं भास्कराचार्यकृतस्य ब्रह्ममीमांसासूत्राणां व्याख्यानस्यान्वेषणे कृते बहुकालानन्तरमेकया वृद्धया ब्राह्मण्या कतिभिस्ताम्रपणैर्विक्रीते स्वकीये पुस्तकस्तोमे वणिक्तनयहस्तगते तस्मिन् पुस्तकस्तोमे किमिदं किमिदं

दर्शयदर्शय इति ब्रुवता मया वङ्गाक्षरलिखितानि जीर्णानि कतिपयपुस्तकानि क्रीतानि। तेषु चैकं कतिपयपत्रहीनमतिजर्जरं भास्करभाष्यमुपलब्धम्। अत्र लेखकेन लिपिकाल एवं लिखितः "इति शारीरकमीमांसाभाष्ये भास्कराचार्यप्रणीते चतुर्थाध्यायः समाप्तः ॥ ० ॥ शकाब्दाः १५४६ ॥ श्रीकृष्णः शरणम् ॥ श्रीहरिः शरणम् ॥ ० ॥" पुस्तकमिदं केनचिद्वेदान्तप्रियेणानेकैर्लेखकैरेकेनैव दिवसेन सत्वरं लेखापितमिति विभिन्नाकारदुष्पठप्रत्येकपत्त्रदर्शनादनुमीयते । परं तु याथातथ्येन परिशोध्य पठनपाठनादिषु उपयोगं नीतमिति समालोचनादवगम्यते।

ततः परं वाराणसीनिवासिश्रीयुक्तबाबूगोविन्ददासमहाशयैर्महता यत्नेन सङ्गृहीतं स्वकीयं देवनागराक्षरलिखितं भास्करभाष्यपुस्तकं दत्त्वा वाराणसीस्थचौखम्बासंस्कृतसीरीजनामकपुस्तकावल्यां मुद्रितं भवेद्यदीदं भाष्यं तदा समीचीनं भविष्यतीति सम्यक् प्रोत्साहितोऽहं मुद्राद्वारा तत्प्रकाशने प्रवृत्तः।

मुद्रणसमये च उक्तादर्शद्वयसमालोचनेन पाठापपाठविवेचनं कृत्वा वङ्गाक्षरलिखितपुस्तकपाठं समीचीनं विज्ञाय मूले स्थापितवान् पाठान्तराणि चाधोभागे टि-

ण्याम् सूत्रपाठेऽपि रामानुजाचार्यादिभाष्यसम्मतान् भास्करभाष्यानुकूलान् पाठान् मूले तत्प्रतिकूलाँश्चाधो भागे टिप्पण्यां सन्निवेश्य मुद्रितवान् । भाष्यविशेषवर्णनं तु भास्कराचार्यवर्णनानन्तरं भविष्यतीत्यास्तां तावत् ।

अयं भास्कराचार्यश्च कस्मिन् काले कस्मिन् देशे चाविर्भूत इति निर्णयस्तु दूरे गतः लोकभास्कर–श्रौतभास्कर–हरिभास्कर–भगवन्तभास्कर—ज्यौतिषिकभास्कर–भदन्तभास्कर–भास्करमिश्र–भास्करशास्त्रि–भास्करदीक्षित–भट्टभास्करपण्डित–भास्कराचार्य–भट्टभास्करमिश्रत्रिकाण्डमण्डन-लौगाक्षिभास्कर-शाण्डिल्यभास्कर–वत्सभास्कर–भास्करदेव–भास्करनृसिंह–भास्कररराय–भास्करानन्दनाथ–भास्करसेनादयोऽनेके भास्करास्तत्तद्ग्रन्थेषूपलभ्यन्ते । भाष्यकृद्भास्कराचार्यैस्तु स्वकृतभाष्ये न कोऽपि परिचयो दत्तो येन तद्देशकालभाष्यरचनासमयश्च निर्णीतो भवेत् ।

यत्तु माधवाचार्येण स्वोक्तशङ्करविजयग्रन्थे १५ सर्गे ८० श्लोकादौ भट्टभास्करशङ्कराचार्ययोः संवादो वर्णितस्तत्तु प्रमाणमपेक्षते परं तु भट्टभास्करो वेदान्तविद्यानिपुणः कश्चिदासीदिति तु न्यायमीमांसावेदा-

न्तग्रन्थेषु तत्रतत्र वेदान्तिभास्करनाम्ना भट्टभास्कर-नाम्ना वा तन्मतोपन्यासादैतिह्येन प्रमाणेन निश्चितं भवति । कदाचिदयमेव भट्टभास्करो भोजराजेन विद्यापतिनाम्नाभिहित इति कथनमपि न साहसास्पदं भविष्यति। तथाहि डाक्तरश्रीभाऊदाजीनामकेन वैद्यराजेन महाराष्ट्रदेशे नाशिकक्षेत्रसमीपे समुपलब्धे ताम्रपट्टे लिखितानि कानिचित् पद्यानि प्रदर्श्यन्ते ।

"शाण्डिल्यवंशे कविचक्रवर्त्ती
त्रिविक्रमोऽभूत् तनयोऽस्य जातः ।
यो भोजराजेन कृताभिधानो
विद्यापतिर्भास्करभट्टनामा ॥
तस्माद् गोविन्दसर्वज्ञो जातो गोविन्दसन्निभः ।
प्रभाकरः सुतस्तस्मात् प्रभाकर इवापरः(१) ॥
तस्मान्मनोरथो जातः सतां पूर्णमनोरथः ।
श्रीमान् महेश्वराचार्यस्ततोऽजनि कवीश्वरः ॥
तत्सनुः कविवृन्दवन्दितपदः
सद्वेदविद्यालता-
कन्दः कंसरिपुप्रसादितपदः
सर्वज्ञविद्यासदः ।

---

(१) प्रभाकरः सूर्यः पक्षे प्रभाकरो मीमांसकाचार्यः ।

यच्छिष्यैः सह कोऽपि नो विवदितुं
दक्षो विवादी क्वचित्
श्रीमान् भास्करकोविदः समभवत्
सत्कीर्त्तिपुण्यान्वितः ॥
लक्ष्मीधराख्योऽखिलसूरिमुख्यो
वेदार्थवित्तार्किकचक्रवर्त्ती(१) ।
क्रतुक्रियाकाण्डविचारसारो
विशारदो भास्करनन्दनोऽभूत् ॥
सर्वशास्त्रार्थदक्षोऽयमिति मत्वा पुरादतः ।
जैत्रपालेन यो नीतः कृतश्च विबुधाग्रणीः ॥
तस्मात् सुतः सिंघणचक्रवर्त्ती दैवज्ञवर्योऽजनि चङ्गदेवः ।
श्रीभास्कराचार्यनिबद्धशास्त्रविस्तारहेतोः कुरुते मठं यः ॥
भास्कररचितग्रन्थाः सिद्धान्तशिरोमणिप्रमुखाः ।
तद्वंश्यकृताश्चान्ये व्याख्येया मन्मठे नियतम् ॥" इति

एतेन कविचक्रवर्त्तिनस्त्रिविक्रमस्य पुत्रो विद्यापतिर्भास्करभट्टः सिद्धान्तशिरोमणिकर्त्तुर्भास्कराचार्यस्य पूर्वपुरुषेषु षष्ठः समभवदिति निष्पन्नम् ।

श्रीभास्कराचार्येण सिद्धान्तशिरोमणौ गोलाध्यायोपान्ते उक्तम् ।

---

(१) एतेनायमपि मीमांसकस्तार्किकश्चाभूदित्यवगम्यते ।

" आसीत् सह्यकुलाचलाश्रितपुरे
त्रैविद्यविद्वज्जने
नानासज्जनधाम्नि विज्जडविडे
शाण्डिल्यगोत्रो द्विजः ।
श्रौतस्मार्तविचारसारचतुरो
निःशेषविद्यानिधिः
साधूनामवधिर्महेश्वरकृती
दैवज्ञचूडामणिः ॥ ६१ ॥
तज्जस्तच्चरणारविन्दयुगल-
प्राप्तप्रसादः सुधी-
र्मुग्धोद्बोधकरं विदग्धगणक-
प्रीतिप्रदं प्रस्फुटम् ।
एतद्व्यक्तसदुक्तियुक्तिबहुलं
हेलावगम्यं विदां
सिद्धान्तग्रथनं कुबुद्धिमथनं
चक्रे कविर्भास्करः ॥ ६२ ॥ "

" रसगुणपूर्णमही १०३६ सम-
शकनृपसमयेऽभवन्ममोत्पत्तिः ।
रसगुण ३६ वर्षेण मया
सिद्धान्तशिरोमणी रचितः ॥ ५८ ॥

एतेन निष्पन्नं भवति सिद्धान्तशिरोमणिकर्तुर्भास्कराचार्यस्य १०३६ शाकवर्षे जन्माथ च ९१८ शाकवर्षमारभ्य ९७३ शाकवर्षपर्यन्तं भोजराजो राजसिंहासनेऽधिष्ठित आसीदिति(१) तस्मिन्नेव समये शारीरकमीमांसाभाष्यकारो भट्टभास्करोऽप्यासीदिति प्रतिभाति। एतत्कालिकीमेव भट्टभास्करस्य स्थितिं ९०६ शकाब्दे वर्तमानस्य न्यायाचार्योदयनस्य न्यायकुसुमाञ्जलौ ३३२ पृष्ठे ५ पङ्क्तौ "ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते"(२) इत्युक्तिः तथैव १४ पङ्क्तौ "भास्करस्त्रिदण्डिमतभाष्यकार"(३) इति वर्द्धमानोपाध्यायस्य न्यायकु-

(१) राजतरङ्गिणीभोजप्रबन्धादिग्रन्थान् समालोचयद्भिः "पञ्चाशत् पञ्च वर्षाणि सप्त मासा दिनत्रयम्। भोजराजेन भोक्तव्यं सगौडं दक्षिणापथमि"त्युदृधृतवद्भिः महामहोपाध्यायश्रीमहेशचन्द्रन्यायरत्नसी. आई. ई.महाशयैः स्वकृतकाव्यप्रकाशटीकाभूमिकायां १७ पृ. ९३२–९८७ शाकवर्षेषु भोजराजः राजसिंहासने स्थित इति निष्पादितम्। तथैव महामहोपाध्यायश्रीदुर्गाप्रसादेन प्राचीनलेखमालायामङ्कितं भोजराजीयं १०७८ विक्रमाब्दीयं (९४३ शाकाब्दीयं) दानपत्रं प्रमाणयता झलकीकरोपनाम्ना भट्टश्रीवामनाचार्येणापि स्वकृतकाव्यप्रकाशटीकाभूमिकायां ५ पृ. २० प. ९१८–९७३ शाकवर्षेषु भोजराजस्य राज्यकालः प्रतिपादित इति।

(२) ब्रह्मपरिणामनिरूपणमस्मिन् मुद्रितभाष्ये १०४।१०५ पृष्ठे द्रष्टव्यम्।

(३) इदं मुद्रितभाष्यं त्रिदण्डिवेदान्त्यनुकूलमेव त्रिदण्डप्रशंसा चास्मिन् मुद्रिते भाष्ये २०८ पृ० ४।२३ पं० निरूपिता। तथा च १०१२ शकाब्दे वर्तमानाद् रामानुजाचार्यात् पूर्वं वर्तमानाः टङ्क–द्रमिण–

सुमाञ्जलिप्रकाशे ऽपि भट्टभास्करमतोपन्यासपुरःसरोक्तिर्द्रढयति। तथाहि लक्षणावल्यामुदयनाचार्योक्तिः।

" तर्काम्बराङ्क ९०६ प्रमितेष्वतीतेषु शकान्ततः।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्॥ " इति

भट्टभास्कराचार्यो विद्याभ्यासादिना पाण्डित्यसम्पादनानन्तरं भाष्यं प्रणीतवान् तदनन्तरं च वृद्धावस्थाया विख्यातकीर्तिरभूदिति सम्भाव्यते ततश्च भोजराजेन विद्यापतिनाम्नाभिहितः। उक्तयुक्त्या उदयनाचार्यसमानकालावस्थायित्वाद् "भास्करगोत्रे युज्यत" इत्युपालम्भोऽपि सम्भवतीति।

अन्येषु भास्करेषु केचिन्नामतः केचिदुपनामतः केचिच्च समयतः शारीरकभाष्यकर्तुर्भास्करभट्टाद्भिन्ना एव सिद्धास्तथाहि

लोकभास्कर—श्रौतभास्कर—हरिभास्कर-भगवन्तभास्कर—ज्यौतिषिकभास्कर—भदन्तभास्कर—भास्करमिश्र—भास्करशास्त्रि——भास्करदीक्षितास्तु नामोपनामभ्यां भिन्नाः। लौगाक्षिभास्कर—वत्सभास्करौ तु गोत्रतो भिन्नौ। भास्करदेव—भास्करनृसिंह—भास्करराय—भास्करानन्दनाथ—भास्करसेनाश्च नामतः समयतश्च भिन्नाः।

---

गुहदेव-भारुचि-यामुनाचार्यादयोऽपि त्रिदण्डिवेदान्तिन एव एकदण्डी त्रिदण्डी वेति मन्वाद्यनुशासनादिति नासमञ्जसं किमपि।

त्रिकाण्डमण्डनभट्टभास्करमिश्रा अपि कृष्णयजुर्वेदीयां तैत्तिरीयसंहितां तैत्तिरीयं ब्राह्मणमापस्तम्बसूत्रं तैत्तिरीयप्रातिशाख्यमापस्तम्बसूत्रध्वनितार्थकारिकां च प्रणीतवन्तः एतेषामितिवृत्तनिरूपणे आनन्दाश्रमसंस्कृतसीरीजमुद्रिते तद्भाष्यसहितरुद्राध्याये भूमिकायां "तथापि भट्टभास्करोऽयं माधवाचार्यान्न प्राचीन इति तु निश्चितमेवेति" इत्येव लेखो दृश्यते स तु प्रमाणानुल्लेखाद्विद्वद्भिश्चिन्त्य इति ।

अयं शारीरकसूत्रभास्करो भट्टभास्कराचार्यस्तु भेदाभेदवादी(१) मुख्यतया शङ्कराचार्यमतखण्डनाय भाष्यं प्रणीतवान् यत आदावेव ।

"सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये ॥"

इति शङ्कराचार्याक्षेपपरं पद्यमुक्तवान् । अपि च ८५ पृष्ठे "तथा च वाक्यं परिणामस्तु स्याद् दध्यादिवदिति

(१) भट्टोजिदीक्षितेन वेदान्ततत्त्वविवेकटीकाविवरणे "भट्टभास्करस्तु भेदाभेदवेदान्तसिद्धान्तवादी"त्युक्तम् । अत्र भाष्येऽपि १०३ पृ. "ननु भेदाभेदौ कथं परस्परविरुद्धौ सम्भवेतां ? नैष दोष" इत्युक्तम् । १६४ पृ० "भेदाभेदरूपं ब्रह्मेति समधिगतम् इदानीं भेदरूपमभेदरूपं चोपास्यमुतोपसंहृतसमस्तभेदमभिन्नं सल्लक्षणबोधरूपमुपास्यमित्ययमंशो विचार्यते ।" इत्यादि ।

विगीतं विच्छिन्नमूलं माहायानिकबौद्धगाथायितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति" इति । १२४ पृ. "ये तु बौद्धमतावलम्बिनो मायावादिनस्तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः ।"

भाष्यं चेदं त्रिदण्डिवेदान्त्यनुकूलं त्रिदण्डप्रशंसा चात्र २०८ पृ. "स्मृतौ च मननादौ त्रिदण्डयज्ञोपवीतादिनियमादुत्तमाश्रमः स्वरूपतो धर्मतश्च निर्ज्ञात इति नातिप्रसङ्गः ।" "स्मृतिभाष्यकारैरुदाहृतत्वात् त्रिदण्डपक्षेऽप्युपपन्नत्वात् ।" इत्यादि । १२८ पृ. "इदानीं पञ्चरात्रसिद्धान्तः परीक्ष्यते न चेयमनुपपन्ना चित्रा श्रुतिर्विरोधाभावात् । कथम् वासुदेव एवोपादानकारणं जगतो निमित्तकारणं चेति ते मन्यन्ते । क्रियायोगश्च तत्प्राप्त्युपायस्तत्रोपदिश्यते अधिगमनोपादानेज्यास्वाध्याययोगैर्भगवन्तं वासुदेवमाराध्य तमेव प्रतिपद्यन्त इति । तदेतत् सर्वं श्रुतिप्रसिद्धमेव तस्मान्नात्र निराकरणीयं पश्यामः ।" इत्यादि

इत्थं मया यावता श्रमेण परिशुद्धिसम्भवस्तावान् परिश्रमः कृतोऽत्र शास्त्ररसिकानामल्पे ऽपि समादरे सकलो निजपरिश्रमः सफलो विभावयिष्यते । अत्र दुरूहत्वाद्भ्रान्तेः पुरुषधर्मत्वात् वृद्धत्वादिन्द्रियदौर्बल्यात्

७७ पृ. १२ पं "यथा कुम्भकारो मत्रजातं निर्मिमाणः(१)" ८५ पृ. २७ पं. "मासायानिक"(२) १०९ पृ. १२ पं. "लक्षणमपि(१) पादेन कृतम्(३)" एवंजातीयकानि बहूनि स्खलितानि वर्तन्ते तानि द्वितीयसंस्करणे परिशुद्धानि भविष्यन्तीति गुणैकपक्षपातिनो विदुषो भूयोभूय एव प्रार्थय इति शिवम्।

---

(१) "कुम्भकारोऽमत्रजात"मिति शुद्धः पाठः पात्रामत्रे च भाजनमिति कोशात्।

(२) माहायानिक इति शुद्धः पाठः।

(३) लक्षणमक्षपादेन कृतमिति शुद्धः पाठः।

गवर्नमेंटसंस्कृतकालेज-
पुस्तकालये वाराणस्याम्
१९।१।१९१४ ई०
} विन्ध्येश्वरीप्रसादद्विवेदी

ॐ श्रीगणेशाय नमः ।

# ब्रह्मसूत्रभाष्यम् ।

## श्रीभास्कराचार्यविरचितम् ।

जन्मबन्धविनिवृत्तिकारणम्
ब्रह्मसूत्रमिदमुद्बभौ(१) यतः ।
श्रोतृचित्तकमलैकभास्करम्
बादरायणमृषिं नमामि तम् ॥

सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यातं यैरिदं शास्त्रं(२) व्याख्येयं तन्निवृत्तये ॥

### अथातो ब्रह्मजिज्ञासा ॥ १ ॥

चतुर्ष्वर्थेष्वथशब्दप्रयोगो दृश्यते । यथाऽऽनन्तर्ये भुक्त्वाथ व्रजति । यथा पूर्ववृत्तापेक्षायाम् । पूर्वं किञ्चिदुक्त्वा विकल्पान्तरं कर्तुमिच्छन्नाह अथायमभिप्राय इति । यथा माङ्गल्ये ।

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ इति ।

यथाधिकारे अथ शब्दानुशासनमिति । तत्र नाधिकारार्थो ब्रह्मजिज्ञासाया अनधिकार्यत्वान्नापि मङ्गलार्थो मङ्गलस्य वाक्यार्थेऽन्वयाभावात् पटहध्वनिवत् श्रवणमात्रगम्यत्वात् । पूर्ववृत्तापेक्षायाश्चानन्तर्याव्यतिरेकात्(३) । आनन्तर्यार्थ इह गृह्यते । तत्र किमपि पूर्ववृत्तं वक्तव्यं तदुच्यते पूर्वं कर्मविचारो वृत्तोऽनन्तरं ब्रह्मजिज्ञासारभ्यते(४) । अत्राहुः । नायं वृत्तवर्तिष्यमाणसम्बन्ध उपपद्यते धर्म-

(१) उदयौ – पा० २ पु० । (२) यदिदं शास्त्रम् – पा० २ पु० ।
(३) अव्यभिचारात् – पा० २ पु० । (४) प्रारभ्यते – पा० २ । ३ पु० ।

जिज्ञासायाः(१) प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः । न चात्र-क्रमस्य प्रतिपादकं प्रमाणमस्ति यथा हृदयस्याग्रे ऽवद्यति अथ जिह्वाया अथ वक्षस(२) इति न चात्राङ्गाङ्गिभावः प्रयाजादिवत् । नाप्यधिकृताधिकारो गोदोहनादिवत् । फलजिज्ञास्यभेदाच्च । अभ्युदयफलं धर्मज्ञानं(३) निःश्रेयसफलं मोक्षज्ञानं(४) साध्यश्च धर्मस्तत्र जिज्ञास्यः सिद्धरूपं ब्रह्मात्र । चोदनाप्रवृत्तिभेदाच्च । अनुष्ठानपर्यवसायिनी तत्र चोदना ब्रह्मचोदना पुनरवबोधपर्यवसायिनी नानुष्ठाने प्रवर्तयति । यथा प्रत्यक्षादिप्रमाणं स्वरूपाववोधकं न प्रवर्तकमेवं तत्त्वमस्यादिवाक्यं स्वरूपाववोधकं न प्रवर्तकमिति । यद्येवं कस्य तर्हीदमानन्तर्यमुच्यते नित्यानित्यवस्तुविवेकः शमदमादिसाधनसम्पत् इहामुत्र फलोपभोगविरागो मुमुक्षुत्वं चेति । एतत् पूर्ववृत्तमेतदानन्तर्यमथशब्देनोच्यते। सत्येतस्मिन् साधनचतुष्टये ब्रह्मजिज्ञासोपपद्यते नान्यथेति । अतःशब्दो हेत्वर्थः यतः श्रुतिरेव कर्मणां क्षयित्वं दर्शयति । तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति । ज्ञानस्य चामृतफलत्वं दर्शयति । ब्रह्मविदाप्नोति परमिति । अतो हेतोर्ब्रह्मजिज्ञासा कर्तव्येति । अत्र ब्रूमः । यत् तावदुक्तं धर्मजिज्ञासायाः प्रागपि ब्रह्मजिज्ञासोपपत्तेरिति । तदयुक्तम् । अत्र हि ज्ञानकर्मसमुच्चयान्मोक्षप्राप्तिः सूत्रकारस्याभिप्रेता । तथा च वक्ष्यति । सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति । कर्मणि चापरिज्ञाते विद्यायाः केन समुच्चयः केन नेति विभागो न शक्यते वदितुं(५) हेयोपादेयप्रतिपत्त्यभावात् । पूर्ववृत्ते तु कर्मज्ञाने काम्यं प्रतिषिद्धं च हेयं नित्येन कर्मणा समुच्चय इति प्रतिपादयितुं शक्यते कर्मसमृद्ध्यर्थानिवोद्गीथाद्युपासनान्यत्र चिन्त्यन्ते तेषां च कर्माधिकृतपुरुषविषयत्वात् । अविज्ञाते तु कर्मणि चिन्ता नोपपद्यते । पूर्वं तु धर्मजिज्ञासा(६) कर्तव्या पुरुषमात्रविषयत्वात् । स्वाध्यायविधेश्चार्थावबोधपर्यवसानात् अधीतवेदस्य गुरुकुले तिष्ठतोऽर्थावबोधोऽवश्यम्भावीति । ब्रह्मज्ञानं तु मुमुक्षोः कस्यचिदेव न च गुरुकुल एव वसतः कस्मादुपायान्तरसापेक्षत्वात् । यज्ञेन दानेनेति । तथा ।

---

(१) कर्मजिज्ञासायाः – पा० २ पु० । (२) चक्षुषः – पा० १ पु० ।
(३) कर्मज्ञानं – पा० २ पु० । (४) ब्रह्मज्ञानं – पा० २ । ३ पु० ।
(५) अवसितुम् – पा० २ पु० । (६) कर्मजिज्ञासा – पा० २ पु० ।

शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदिति विहितमुपायान्तरम्। न च स्वाध्यायविधिरुपायान्तरमाक्षेप्तुं क्षमः पुरुषान्तरेषु कर्मावबोधसमर्थेषु चरितार्थत्वात् आत्मनश्च दुर्विज्ञेयत्वादन्तःकरणस्य च रागाद्युपहतवृत्तित्वात्। श्रवणादिभिर्बहुभिर्यो न लभ्यते शृण्वन्तोऽपि बहवो यं न विदुः। आश्चर्यो वक्ता कुशलोऽस्य लब्धा(१) आश्चर्यो ज्ञाता कुशलोऽनुशिष्ट इतिदर्शनात्। एकमेवाद्वितीयम् अहं ब्रह्मास्मीति चाभेदज्ञानानुत्पत्तेः(२)। तस्मिन्निवृत्ते तज्जिज्ञासानिवृत्तौ प्रसज्यमानायां प्रतिपन्नाश्रमान्तराणां चतुर्णामप्याश्रमिणामविशेषेण वेदान्तविध्यधिकारिता ब्रह्मजिज्ञासेयं प्रस्तूयते। कोऽसौ विधिः। श्रोतव्यो मन्तव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यश्च तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्। महाशाला महाश्रोत्रिया इतिदर्शनात्। ननु स्वाध्यायोऽध्येतव्य इतिश्रवणे सत्यध्ययने प्रवृत्तिः अध्ययने च सति वेदार्थश्रवणे प्रवृत्तिरितीतरेतराश्रयदोष इति चेत्। नैतदेवम्। अध्ययनविधिकारितं च श्रवणादिवाक्यस्वीकरणं तच्चाध्यापनविधिप्रयुक्तम्। उक्तं च। उपनीय गुरुः शिष्यं वेदमध्यापयेदिति। शिष्याचार्यसम्बन्धस्यानादित्वादतो वर्षसहस्रे ऽप्यासीदिति नानवस्थादोषः। श्रवणे चाभिप्रवृत्तस्य कोऽसावात्मेत्यपेक्षायां स्वरूपावबोधपराणामिदं सर्वं यदयमात्मा स एषो यदणिमैतदात्म्यमिदं सर्वमित्यादीनि प्रतिवेदान्तं प्रवर्तन्ते। विदिते चात्मतत्त्वे प्रत्ययावृत्तिलक्षणं तदुपासनमुपदिश्यते निदिध्यासितव्यो विज्ञाय प्रज्ञां कुर्वीतेति। कर्मोपासनयोश्च समुच्चयो वक्ष्यते। अभेदज्ञानमभ्यस्यमानमज्ञानवासनामुच्छिनत्ति रागादिवासनां च। कर्म पुनः कर्मवासनामित्युपरिष्टात् स्थास्यति। स्वाध्यायविधिकारिता इतरविधिकारिता वास्तु ब्रह्मजिज्ञासातः सर्वथा धर्मजिज्ञासायाः(३) पूर्वभावित्वं सिद्धम्। तस्मात् पूर्ववृत्ताद्धर्मज्ञानादनन्तरं ब्रह्मजिज्ञासेति युक्तम्। यदप्युक्तमङ्गाङ्गिभावाभावादिति। तदप्यसिद्धम्। कर्मसमृद्ध्यर्थिनो यजमानस्य उद्गीथाद्युपासनानां विहितत्वात् लोकेषु पञ्चविधं सामोपासीतेत्यादीनां च कर्माधिकृतस्यैवाभ्युदयार्थिनो विधानात् गोदोहनादिवत्। यदप्युक्तं फलजिज्ञास्यभेदादिति। तदपि प्रत्युक्तम्॥

---

(१) कुशलोऽप्यनुज्ञाता – पा० २ पु०। (२) अनुपपत्तेः – पा० २ पु०।
(३) कर्मजिज्ञासायाः – पा० २ पु०।

समुच्चयाभ्युपमात् केवलकर्मणां चाभ्युदयफलं धर्मज्ञानामिष्टमेव । जिज्ञासाभेदश्चोदनाप्रवृत्तिभेदश्चास्मत्पक्षे ऽपि न विरुध्यत इति न किञ्चिद् दूषणं पश्यामः । नित्यानित्यविवेकादयोऽन्तःकरणधर्माः पूर्वत्राप्रकृताः स्वशब्देन वानिर्दिष्टाः कथमिव सूत्रकारस्य विवक्षिता इति प्रतिपत्तुं शक्यते तेषामनवस्थितत्वात् । यदप्युक्तं कर्मणां क्षयित्वं ज्ञानस्य च निःश्रेयससाधनत्वमतःशब्देन व्यपदिश्यत इति । तदसत् । अतःशब्दो हि वृत्तस्यापदेशको हेत्वर्थतया । यथा क्षेमः सुभिक्षोऽयमतोऽहमस्मिन् देशे वसामीति स्ववाक्योपात्तस्य अर्थाच्च गम्यमानस्य(१) हेतुत्वं वदति तद्यथेह कर्मजित इति केवलस्य कर्मणः क्षयित्वमुच्यते न ज्ञानसहकारिणः । तथा च श्रुतिः । स य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयत इति । स्वतः क्षणिकस्यापि कर्मणो ज्ञानरससिद्धस्याक्षयिफलत्वान्न क्षीयत इत्युच्यते । कथमयमर्थो गम्यते तद्वा स्यात् ततः क्षीयत इत्यनेवंविदः कर्मक्षयमभिधायात्मविदस्तदभावप्रतिपादनपरत्वाद्वाक्यस्य । तस्मात् पूर्वस्य कर्मज्ञानस्य(२) अतःशब्देनोपदिश्यते हेतुत्वम् । तच्चोभयत्र ब्रह्मज्ञानं प्रति हेतुत्वमारम्भे फलप्राप्तौ च । कर्मणि पूर्ववृत्ते तदपेक्षा ब्रह्मजिज्ञासा कर्तुं शक्यत इत्यारम्भे हेतुत्वं कर्मणा समुच्चितं ज्ञानं क्षेमप्राप्तिनिमित्तमिति फलप्राप्तौ हेतुत्वम् । अन्ये पुनरन्यथा सम्बन्धं वर्णयन्ति । देवादिभ्योऽनृणीभावः पूर्ववृत्तः प्रज्ञाकषायपरिपाकश्च एतदानन्तर्यमथशब्देनोच्यत इति । कथं वेदेन किल बुद्धिपूर्वं स्वाध्यायाध्ययनप्रभृति पुरुषः कर्मस्वेव प्रवर्त्यते । ततः शास्त्रीयनैसर्गिकवासनयोर्भवाभिभवौ । ततश्च पुण्यापुण्ययोरुपचयापचयौ । ततश्चोत्तमाधिकारविधियोग्यः पुरुषो भवति । कः पुनरुत्तमाधिकारविधिः यं प्रति कर्मभिः पुरुषो योग्यतामापाद्यते । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । तत्र योऽयं कर्ता भोक्ता विज्ञानात्मा लोकप्रसिद्धः स दर्शनक्रियाकर्मत्वेन नियम्यते द्रष्टव्य इति । द्रष्टव्ये च वस्तुनि विचिकित्सोपजायते कियत् पारमार्थिकं कियदौपाधिकमिति नानुमानागमगम्ये(३) । ततश्च तस्मिन् रममाणस्य निरुपद्रवं परमात्मतत्त्वमुपदिश्यते श्रोतव्य इ-

(१) अर्थाद्गम्यमानस्य – पा० २ पु० । (२) पूर्ववृत्तस्य ज्ञानस्य – पा० २ पु० ।
(३) नानुमानगम्ये – पा० २ पु० ।

ति(१)। तस्मिंश्च श्रुते ऽभ्युपगमप्रधानं ज्ञानमुपादिश्यते मन्तव्य इति । ततो ध्यानं निदिध्यासितव्य इति। सोऽयमनेन चतुर्विधेन विधिना ध्यानपर्यन्ते वेदार्थे नियुज्यते तत्प्रयुक्ता चेयं ब्रह्मजिज्ञासा प्रस्तूयते । ननु च मीमांसायामेव द्वादशलक्षण्यां शब्दव्यापारः कृत्स्नो निरूपितः तद्व्यतिरिक्तः शब्दव्यापारो नास्ति किमर्थं प्रतिज्ञान्तरमुच्यते । सत्यमेवं तथापि दर्शपूर्णमासाक्षिप्तकल्पसूत्रादिप्रयोगशास्त्रवदुत्तमाधिकाराक्षिप्तं शरीरकं शास्त्रमारभ्यत इति । अत्र वदामः । तदिदं सम्बन्धकथनं न्यायविदो न श्रद्दधते । न हि धर्माधिकारस्य कृत्स्नस्य पुरुषसंस्कारद्वारेणोत्तमाधिकारोपयोगित्वे ऽस्ति किञ्चित् प्रमाणम्। स्वाध्यायविधिस्तावत् कर्मावबोधार्थः तदवबोधश्च तदनुष्ठानार्थो दानाद्यर्थश्च । तथाचोक्तं संवर्तेन । विद्यादानेन सुमतिर्ब्रह्मलोके महीयत इति । कर्म च त्रिविधं काम्यं नित्यं नैमित्तिकं च । तदपि पुरुषार्थं काम्यं तावत् स्वर्गकामः पुत्रकाम इति तावन्मात्रोपक्षीणत्वात् नान्यार्थं शक्यं कल्पयितुम् । यच्छब्द आह तदस्माकं प्रमाणमिति हि न्यायविदः । न च योग्यतानाम प्रयोजनान्तरं शब्दादवगम्यते। यद्यपि नित्यं कर्म यावज्जीवं जुहुयात् सन्ध्यामुपासीतेति तत् पुरुषस्यैव प्रत्यवायपरिहारार्थमभ्युदयार्थं च । तच्चोक्तम् । अकुर्वन् विहितं कर्मेति। श्रुतिश्च भवति । त्रयो धर्मस्कन्धा इत्युपक्रम्य सर्व एते पुण्यलोका भवन्तीति। भावनास्वाभाव्याद्धावश्यं भाव्येन केनापि सामान्येन भवितव्यमिति पुरुषार्थपर्यवसायी सर्वो विधिः कर्मकाण्डे। न तस्य योग्यतापादनं नामापरं कार्यं शक्यमुत्प्रेक्षितुमत्यन्तातीन्द्रियत्वादस्यार्थस्य । दिव्यदृशो हि ते ये कल्पयन्ति पुण्यापुण्योपचयापचयौ च पुरुषार्थौ नोत्तमाधिकारोपयोगिनौ विधानाभावात्। यं प्रति यो विधिः प्रवृत्तः क्रतुं पुरुषं वा स तदर्थ एव नान्यार्थः शक्यः कल्पयितुम् । विस्तरेण तत्तु समन्वयादित्यत्र निराकरिष्यामः । यदप्युक्तं दर्शनक्रियाव्याप्यतया विज्ञानात्मा नियम्यत इति । तदप्यपव्याख्यानम् । तत्रात्मशब्देन परमात्मा विवक्षितः कथं वाक्यशेषात् । आत्मनो वा अरे दर्शनेन श्रवणेन मत्या(२) विज्ञानेनेदं सर्वं विदितमिति सर्वविज्ञानप्रतिज्ञानात् । न च सकृदुच्चरितो जीवपरः परमात्मपरश्च शक्यो

(१) उपदिश्यत इति – पा० २ पु० । (२) मननेन – पा० २ पु० ।

ग्रहीतुम् । एकार्थनिवृत्तत्वादे(१)कस्मिन् प्रयोगे । किं चानधिगतार्थगन्तृत्वाद्धिधीनां प्रत्यभिज्ञाप्रत्यक्षश्चायं विज्ञानात्मेत्यात्मवादे स्थापितम् । न च प्रत्यक्षे वस्तुनि विचिकित्सा अग्न्यौष्ण्यवत् प्रत्युतानुमानागमगम्ये सत्तामात्रावगमात् तद्विशेषे विचिकित्सा स्यात् । तस्मादयमर्थः । परात्मदर्शनं कुर्यादिति । न च दर्शने पुरुषस्य साक्षात् स्वातन्त्र्यमस्तीति दर्शनार्थः पुरुषप्रयत्नो विधीयते । स च निर्विषयो न सम्भवतीति श्रवणादिरुपायो विधीयते । श्रवणादिनोपायेन प्रयतमानस्यात्मदर्शनमुत्पद्यत इति । यदप्युक्तं प्रयोगशास्त्रवदारभ्यत इति । तदप्यपेशलम् । यथा धर्मजिज्ञासा विप्रतिपत्तिनिराकरणार्थमारब्धा तथा ब्रह्मजिज्ञासा । सुतरां चात्र विप्रतिपत्तयो भवन्ति मोक्षवादिनां तीर्थकराणां बहुत्वात् । न च ब्रह्मविषयो विचारो मीमांसायां कचिदधिकरणे वर्तते उपदेशविचारा(२)र्थत्वेन कृत्स्नस्य शास्त्रस्य पर्यवसानात् । यथा च तत्र द्वादशलक्षण्या विना धर्मविचारो न परिसमाप्यते । तथा चतुर्लक्षण्या विना ब्रह्मविचारः । प्रतिवाक्यं च वचनव्यक्तीनां दुर्विज्ञेयत्वात् अज्ञानसंशयविपर्यया न निवर्तेरन् । प्रमाणलक्षणं तु साधारणम् । श्रुत्यादिप्रमाणं चाविरुद्धमेकत्र स्थितमन्यत्राश्रीयते अधीतवेदस्य श्रोतुरेकत्वात् । यदि पुनरेकत्रोक्तं प्रमाणमन्यत्राप्युच्येत पुनरुक्तमेव स्यात् । अत एवोपवर्षाचार्येणोक्तं प्रथमपादे । आत्मवादं तु शारीरके वक्ष्याम इति । अतः पूर्वोक्त एव सम्बन्धः । ब्रह्मशब्देनेश्वरो गृह्यते न ब्राह्मणजातिजीववेदचतुर्मुखानां ग्रहणं ब्रह्मलक्षणस्य वक्ष्यमाणत्वात् । ब्रह्मणो जिज्ञासेति कर्मणि षष्ठी कर्तृकर्मणोः कृतीति विशेषविधानात् । न सम्बन्धसामान्ये । अत एव चतुर्थी विभक्तिरपि न युज्यते ब्रह्मणे जिज्ञासेति । ब्रह्मणश्चेप्सिततमत्वात् प्राधान्यं सन्वाच्येच्छाया उपसर्जनत्वात् । इष्यमाणमिह ज्ञानं प्रधानं ज्ञानमपि ज्ञेयार्थमिति ब्रह्मणः प्राधान्यमुक्तम् । किं पुनरिदं ज्ञानं नाम । अत्र केचिन्मीमांसका आहुः । नित्यानुमेया ज्ञानक्रिया ततो घटादिविषयं संवेदनमुत्पद्यते तत् तस्याः फलमिति । यथा पाकक्रियाया ओदनमिति । तदिदमयुक्तमिति ब्रूमः । ज्ञानक्रियाकल्पनायां प्रमाणाभावात् । येभ्यश्चक्षुरादिभ्यः करणेभ्यः क्रियोत्प-

(१) एकार्थनिष्ठत्वात् – पा० २।३ पु० । (२) उपदेशातिदेशविचारा – पा० २।३ पु० ।

त्तिरिष्यते तेभ्य एव प्रमितिरिष्यतां प्रमितिः संवेदनमनुभव इति चानर्थान्तरं तद्भावभावित्वात् । आलोकेन्द्रियमनःसंस्कारेषु हि सत्सु संवेदनमुत्पद्यत इति तदभावे नोत्पद्यते । यदि पुनरपरं ज्ञानं कल्प्येत तस्याप्यन्यत् तस्याप्यन्यदित्यनवस्था स्यात् । न च ज्ञानक्रियानुमाने लिङ्गमस्ति । संवेदनमिति चेत् । न । अगृहीतसम्बन्धत्वात् । यदि लिङ्गी प्रत्यक्षः स्यात् ततोऽनेनेदं लिङ्गं व्याप्तमिति शक्यते सम्बन्धो ग्रहीतुं यथाग्निधूमयोः न चात्र ज्ञानक्रिया प्रत्यक्षा । यदि च प्रत्यक्षा तत एव सिद्धत्वात् किमनुमानेन ज्ञातसम्बन्धस्यैकदेशदर्शनादिति ह्यनुमानलक्षणम् । इन्द्रियशक्तयस्त्वर्थापत्तिसमधिगम्या इति स्थितम् । न चार्थापत्तिरस्ति इन्द्रियार्थसन्निकर्षादनन्तरमनुभवोत्पत्तेः । अतोऽनुभव एव ज्ञानं न तद्व्यतिरिक्तं किञ्चित् तस्य च हानादिबुद्धयः फलम् । पाकादिषु तूपपद्यते क्रियाकारकफलानां प्रत्यक्षसिद्धत्वात् । किं पुनर्ज्ञानस्य सतत्त्वम् । केचिदाहुरात्मप्रमेयमिन्द्रियद्वारोपाधिनिर्गमा(१) विषयेषु वर्तते अनेकच्छिद्रघटमध्यस्थप्रदीपप्रभावदिति । तदिदमसम्यग्दर्शनम् । क्षणिकमिदं रूपादिज्ञानं नित्यमात्मचैतन्यं कथं नित्यानित्ययोरैक्यम् । यदि च विषयविषयं ज्ञानमात्मचैत्यन्यमेव स्यात् ततः सर्वाणि तानि युगपदवतिष्ठेरन्निति न कदाचिद्विषयविस्मरणं स्यात् । तस्मादालोकेन्द्रियादिभ्यो ज्ञानमुत्पद्यमानं निरुध्यमानं चान्यदात्मचैतन्यं चान्यदिति युक्तम् । ज्ञातुमिच्छा जिज्ञासेति प्रकृत्यर्थप्रधानेयमिच्छा धातोः कर्मण इति धातुवाच्यस्यार्थस्य ईप्सितत्वस्मरणात् । तत् पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा । यदि प्रसिद्धं न जिज्ञास्यमथाप्रसिद्धं नितरां सोऽयमनर्थको ब्रह्मजिज्ञासारम्भः । तदुच्यते । प्रसिद्धं तावद्ब्रह्म आगमप्रमाणगम्यत्वात् सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमिति जगत्कारणोपदेशात् ब्रह्मशब्दव्युत्पत्तेश्च बृंहतेर्धातोर्ब्रह्म यतः परं बृहदधिकं नास्ति तन्मूलकारणमेव पारिशेष्यात् कार्यप्रपञ्चे तु ब्रह्मशब्दो गौणः मुख्यपूर्वश्च(२) गौणो भवति यथाग्निर्माणवक इति । किमर्था तर्हि जिज्ञासा तद्विशेषं प्रति विप्रतिपत्तिनिराकरणार्था । केचित्त्रिगुणं प्रधानं जगत्कारणमाहुः । अपरे परमाणुं प्रतिजानते । अतः प्रस्तूयते ब्रह्मजिज्ञासा । ब्रह्म च कारणात्मना कार्यात्मना जीवा-

(१) द्वारेभ्यो विनिर्गता – पा० २ । ३ पु० । (२) अर्थपूर्वश्च – पा० २ । ३ पु०

त्मना च त्रिधावस्थितम् । तत्राविशेषेण ब्रह्मजिज्ञासा प्रस्तूयते ब्रह्मैवेदं सर्वमिति ब्रह्मशब्दस्याविशेषात् । तत्र स्वरूपं प्रमाणं च प्रथमेनाध्यायेन प्रतिपाद्यते । द्वितीयेन स्मृतिविरोधपरिहारः परमतनिराकरणं च तर्कपादे श्रुतीनां च परस्परविरोधपरिहारः । तृतीयेन संसारगतिवर्णनं जीवस्यावस्थाभेदो ब्रह्मसतत्त्वं विद्यानां भेदाभेदविचारो ज्ञानकर्मसमुच्चयश्चेति । चतुर्थेन ज्ञानावृत्तिरर्चिरादिमार्गनिरूपणं फलनिरूपणं च क्रियत इति ॥ १ ॥

किं पुनस्तद्ब्रह्मेति लक्षणमुच्यते केवलमागमैकसमधिगम्यत्वात् तत्प्रसिद्धमेव लक्षणं दर्शयितुमाचार्यः प्रववृते ।

## जन्माद्यस्य यतः ॥ २ ॥

जन्म आदिर्यस्य तदिदं जन्मादि सृष्टिस्थितिप्रलयम् । तद्गुणसंविज्ञानो बहुव्रीहिः यथा लम्बकर्णमानयेति । अस्येति त्रिजगन्निर्दिश्यते यत इति कारणम् । यस्मादीश्वरात् सर्वज्ञात् सर्वशक्तेः परमकारणादस्य जगतो नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृसंयुक्तस्य, नियतदेशकालफलोपभोगाश्रयस्याचिन्त्यरचनस्य सृष्टिस्थितिप्रलयाः प्रवर्तन्ते तद् ब्रह्मेति प्रतिपत्तव्यम् । उपादानं कारणं(१) चेह लक्षितम् । वैशेषिकाः पुनरनुमानेन केवलं निमित्तकारणमीश्वरं साधयन्ति । बुद्धिमत्कारणपूर्वकं जगत् सावयवत्वात् कार्यत्वाद्वा घटादिवदिति । तदयुक्तम् । सम्बन्धग्रहणाभावात् । न हि सावयवेनानेन जगता ईश्वरस्य सम्बन्धोऽनुभूतपूर्वः(२) तस्यातीन्द्रियत्वात् । बुद्धिमत्कारणपूर्वकमिति च सिद्धसाधनं कर्मनिमित्तत्वात् संसारस्य कर्मणश्च बुद्धिमत्पूर्वकत्वात् । पुत्त्रादिजननमपि यत् प्रमाणान्तरसिद्धं तदपि बुद्धिमता क्रियते । यथा च दृष्टान्ते कुम्भकारादिः असर्वज्ञः शरीरेन्द्रियवांश्च कर्ता तथा दार्ष्टान्तिकेऽपि शरीरादिमत्त्वं रागादिमत्त्वं च प्रसज्यते ततश्चानीश्वरत्वम् । न च वादिनो योऽभिमतो धर्मः स एव ग्रहीतव्यो न प्रतिवाद्युक्त इति नियन्ता कश्चिदस्ति । अत्यन्तातीन्द्रिये वस्तुनि साध्यमाने यावन्तो धर्मा द-

(१) उपादानं कारणं निमित्तकारणं – पा० २ । ३ पु० ।
(२) सम्बन्धः कारणानुभूतपूर्वः – पा० पु० ।

ष्टान्ते(१) अन्वयव्यतिरेकपरिशुद्धाः सम्भवन्ति ते सर्वे प्रसज्यमानाः केन वार्यन्ते। ननु चैवमनुमानोच्छेदः प्रसज्येत अनित्यः शब्दः कृतकत्वाद्घटादिवदिति दृष्टान्तधर्माः सर्वे शब्दे प्रसज्येरन्। अत्रोच्यते। न भवता सम्यगनुमानवृत्तं व्यज्ञायि प्रमाणान्तरगोचरे हि लिङ्गिनि तेन वारिता धर्मा निवर्तन्ते पाक्यत्वादयः यः पुनः प्रत्यक्षाद्यविरुद्धो नित्योऽनित्यो वेति प्रतिज्ञायते स तत्र हेतुना साधयितुं शक्यते अत्र पुनः सावयवत्वादित्यनेन हेतुना यावन्तो धर्माः प्रतिबद्धास्ते सर्वे प्रसज्यन्त एव। वाद्युक्तवत् प्रतिवाद्युक्तमपि दूषणं ग्रहीतव्यम्। एवं सावयवत्वादिति चानैकान्तिको हेतुः न केवलमयं विरुद्ध एव कथं बीजादङ्कुरो जायते न तत्र बुद्धिमत्कारणपूर्वकत्वम्। प्रत्यनुमानं च क्षित्यादीनि वायुपर्यन्तानि कार्याणि न भवन्तीति महाभूतशब्दवाच्यत्वादाकाशवत्। अतः सावयवत्वात् कार्यत्वादित्यादयो हेतवो हेत्वाभासा इति स्थितम्। अत एवेदं सूत्रमनुमानप्रदर्शनार्थं न भवति किं तु वेदवाक्यप्रदर्शनार्थं किं पुनस्तद् यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति ॥ २ ॥

जन्मादिकारणं ब्रह्मेति कथमवगम्यते न हि पूर्वसूत्रे विशिष्योक्तं येन प्रमाणविशेषावधारणं स्यादत आह।

## शास्त्रयोनित्वात् ॥ ३ ॥

शास्त्रं योनिः प्रमाणं यस्य तदिदं शास्त्रयोनि ब्रह्म तस्य भावः शास्त्रयोनित्वं शास्त्रप्रमाणकत्वादिति यावत्। अत्र केचिदाहुः। प्रपञ्चप्रविलापनद्वारेणात्मनः कार्यत्वान्नियोगविषयत्वमतश्च शास्त्रयोनित्वं न च स्वत उपाधिनिबन्धनायाश्च कर्तव्यतायाः प्रामाण्ये कश्चिद्विशेष इति। तदिदं निष्प्रमाणकमभिहितम्। नित्य आत्मा कथं कार्यत्वं प्रतिपद्यते कार्यश्चेद्घटवदनित्यः स्यात् कार्यश्च नित्यश्चेति परस्परव्याहतं वचनं न चान्यस्मिन् कृते ऽन्यः कृतो भवति न हि घटे कृते नभः कृतं भवति यदि श्रुतिर्ब्रूयादात्मानं कुर्यादिति तदा अशक्योपदेशादप्रमाणं स्याद् यथाग्निना सिञ्चेदुदकेनादीपयेदिति वचनमप्रमाणम्। अथैतद्दूषणभयात् प्रपञ्चप्रविलापनं कुर्यादिति

(१) दृष्टान्ते दृश्यन्ते – पा० २ पु०।

वाक्यार्थं कल्पयेत् तदप्यशक्यत्वात् प्रविलापनस्याश्रुतत्वाच्च न हि पुरुषमात्रेण पृथिव्यादीनि महाभूतानि प्रविलापयितुं शक्यन्ते समाहिते मनसि सुषुप्ते वा सर्वं तिरोहितं व्युत्थितस्य तदेव सर्वं पुरतोऽवतिष्ठते न च प्रपञ्चप्रविलापने कश्चिदुपायोऽस्ति न हि प्रपञ्चेनैव प्रपञ्चप्रविलापनं शक्यं कर्तुमनवस्थाप्रसङ्गात् सोऽप्यन्येन तस्याप्यन्येन तस्याप्यन्येनेति(१)। साधारणो वा प्रपञ्चः प्रविलाप्यते विशिष्टो वास्ति। आत्मीयबन्धकारणस्याविद्याकामकर्मलक्षणस्य विनाशनं प्रपञ्चप्रविलापनं यदि मन्यसे तत्र नास्ति विसंवाद इति साधारणे च प्रविलापिते सर्वमुक्तिप्रसङ्गः शुकेन व्याससूनुना विनाशितं जगदद्य न दृश्येत। प्रपञ्चप्रविलापनविषयश्च(२) नियोगो नियोज्यपुरुषादिसापेक्षत्वात्। तत्र यदि कर्ता प्रविलापिता स्यात् तदेदानीं नियोगः क्रियेत नियोगोऽपि कार्यरूपश्चेत्(३) क्रियावतः प्रपञ्च एव वा न च प्रपञ्चरूपेण नियोगेन प्रपञ्चप्रविलापनं सम्भवति तुल्यत्वात् न च नियोगः कारकत्वेनोपदर्श्यते कार्यत्वेन परं न च साध्यत्वेन साधनान्तरं प्रपञ्चरूपमभ्युपगन्तव्यमिति कुतः प्रपञ्चप्रतिपादनप्रविलापनसम्भवः। किं च प्रतीतिवेलायामेवात्र प्रविलयोऽभ्युपगम्यते अन्यत्र पुनरग्निहोत्रादौ प्रतीतिकालोऽन्योऽनुष्ठानकालोऽन्यः यदि च प्रतीतिमात्रेण नियोगसिद्धिरिहेष्यते तथा सर्वत्रेत्यनुष्ठानलोपः प्रसज्येत न हि प्रविलयः कर्तव्य इतिज्ञानमात्रात् प्रविलयो जायते न च ध्यानं प्रविलयहेतुः ध्यातृध्येयादिप्रपञ्चोत्पत्तित्वाद्ध्यानाच्च व्युत्थितस्य पृथिव्यादीनां तथावस्थानात्। किं च प्रविलापनं व्यापारः किं वा अभाव इति यदि व्यापारः प्रपञ्चस्तदवस्थ एव अथाभावस्तदा तद्विषयो नियोगो नोपपद्यते तस्यावस्तुत्वप्रतिज्ञानात्। न हि शशविषाणविषयो नियोगः सम्भवति। अत एव कर्मकाण्डेऽपि न कलञ्जं भक्षयेदित्येवमादिषु नियोगानुपपत्तिरित्यलमतिप्रसङ्गेन। अथात्मज्ञानविषयो नियोगः परिकल्प्येत आत्मज्ञानं कुर्यादिति। तदप्ययुक्तम्। ज्ञानस्यापुरुषतन्त्रत्वात्। क्रिया हि कर्तुमन्यथा वा कर्तुं शक्यते अश्वेन गच्छति पद्भ्यां वा पुरुषेच्छानुरोधित्वात् न ज्ञानं पुरुषेच्छामनुरुध्यते प्रमाणप्रमेयवशवर्तित्वात् तदुपायस्तु शक्यते विधातुमनुष्ठातुं च श्रवणादिः। न तु साक्षात् स्वे-

(१) तस्यतस्याप्यन्येनेति – पा० २। ३ पु०।
(२) प्रविलयविषयश्च – पा० २। ३ पु०। (३) कार्यवशात् – पा० २ पु०।

च्छया ज्ञानं पुरुषो निष्पादयितुं शक्नोति । ननु च स्वाध्यायविधिना ज्ञानं विधीयते। न। तत्राध्ययनं विधीयते अर्थज्ञानं तु फलं तच्च स्वप्रमाणादग्निहोत्रादिवाक्यात् स्वप्रमेये स्वयं(१) जायते न पुरुषेच्छयेति। इदं च भवान् पृष्टो व्याचष्टां किमात्मज्ञानमुत्पन्नमनुत्पन्नं वेति। यद्यनुत्पन्नं विषयासिद्धिर्न नियोगसिद्धिर्विषयसिद्ध्या हि नियोगसिद्धिरिष्यते यथा स्वर्गकामो यजेतेति यागसिद्ध्या नियोगसिद्धिस्तद्वदत्रापि स्यात् । अथ श्रवणादिनोपायेनोत्पन्नं ज्ञानं तदा तेनैव पुरुषार्थसिद्धेः किमन्तर्गडुना नियोगेन कल्पितेनेति(२)। तथा च श्रुतिः। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते ऽयनायेतीति। ज्ञाननियोगयोश्च यदि सम्बन्धो नेष्यते अनन्वितो वाक्यार्थः स्यात्। अथ सम्बन्धोऽस्ति तत्रापि गुणप्रधानयोः परस्परसम्बन्ध इत्यवश्यमेकस्य गुणभावोऽन्यस्य प्राधान्यं यदि नियोगो ज्ञानार्थः स्यात्। नियोगस्य वाक्यार्थतया सर्वत्र यत् प्राधान्यं प्रतिज्ञातं तद्धीयेत। अथ ज्ञानं नियोगसिद्ध्यर्थं ततो मुक्त्यर्थत्वं(३) न स्यात् न चोभयार्थत्वे प्रमाणमस्ति न च नियोगो मुक्त्यर्थः अश्रुतत्वात् तमेव विदित्वेति ज्ञानस्यैव साक्षादुपदेशात् । न च ज्ञानशब्देन नियोगो विधीयत इत्यत्र नियोगपरिकल्पनं कल्पनमेवेत्युपरम्यते ॥ ३ ॥

ननु च शास्त्रयोनित्वं ब्रह्मणो नोपपद्यते कस्मात् कार्यपरत्वाद्वेदस्य। तथाहि चोदनालक्षणोऽर्थो धर्मः तस्य ज्ञानमुपदेशः तद्भूतानां क्रियार्थेन समाम्नायः आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति कार्यपरत्वेनैव तत्रतत्रानुक्रमणात् । न च सिद्धरूपे ब्रह्मणि विधिः सम्भवति साध्यार्थविषयो हि सः स्वर्गकामो यजेतेख्यातशब्देभ्यः क्रिया प्रतीयते सिद्धरूपे च वस्तुनि वाक्यं प्रयुज्यमानं प्रमाणान्तरसापेक्षं यथा पचति गच्छतीति प्रमाणान्तरेणोपलभ्य प्रयुङ्क्ते न च लोके स्वरूपपरः प्रयोगो दृश्यते। ननु नायं सर्पो रज्जुरेवेति दृश्यते। नैतदेवम्। तत्रापि विधिरध्याह्रियते माभैषीरिति।वृद्धव्यवहारे यत्परः प्रयोगो दृश्यते तत्परो वेदो भवितुमर्हति तत्पूर्वकत्वात् तद्व्यवहारस्य। किं च कार्यपरेषु वाक्येषु प्रयुज्यमानेषु पदानां वाचकशक्तिरवधार्यते तेन गामानयाश्वमानयेति तथा शुक्लां गां कृष्णामित्येवं जातिगुणक्रियावचनानां बहुशः प्रयोगदर्शनात् सम्बन्धव्युत्पत्तिर्भवति न च स्व-

(१) प्रमेयेष्विदं – पा० २ पु०। (२) जल्पितेन – पा० २ पु०।
(३) ह्यर्थत्वं – पा० १ पु०।

रूपे व्युत्पत्तिर्दृश्यते अतो व्युत्पत्तिशून्या स्वरूपावगतिः । अतो वेदान्तवाक्यानां कर्मापेक्षितकर्तुः स्वरूपसमर्पणेनार्थवत्त्वं जपार्थत्वं वा । तथा चोक्तम् । कर्मापेक्षाः सर्वे वेदान्ता इति केचिदेवं मीमांसका मन्यन्ते । अपरे पुनर्मीमांसकदर्शनानुसारिणो वेदान्तमेवं समन्वयन्ति(१) । प्रतिपत्तिविधिविषयतया शास्त्रयोनित्वं न स्वरूपपरतया । तथा च विधिः । श्रोतव्यो मन्तव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति । कोऽसावात्मेत्यपेक्षायां सर्वेषां वेदान्तवाक्यानां स्वरूपप्रतिपादनार्थानां सदेव सौम्येदमग्र आसीदित्येवमादीनां तादर्थ्येनोपयोग इति कृत्स्नो वेदान्तः कार्यपर इति । भवतु तावद्वेदान्तगतानां वाक्यानामेवमद्वैतात्मप्रतिपत्तिविधिपरत्वेन समन्वयः कर्मकाण्डस्य तु कथं समन्वय इति न चान्यतरस्य परित्यागः प्रामाण्याविशेषात् । अत्रोच्यते । भेदाभेदविषययोः कर्मज्ञानकाण्डयोः परस्परविरोधादन्यतरानुगुण्येनान्यतरद्व्याख्येयम् । तत्र निःश्रेयसफलप्रतिपादनपरस्य वेदान्तस्य न कर्मविधिशेषत्वेन व्याख्यानं युक्तं कर्मविधीनां तु तादर्थ्यं शक्यमवगन्तुं कथमान्वयिकं प्रासङ्गिकं च द्विविधं कार्यं दृश्यते । स्वर्गकामो ग्रामकाम इत्यान्वयिकं कार्यम् । प्रासङ्गिकं पुनः स्वाभाविकीनां बाह्याभ्यन्तरप्रवृत्तीनामुपरमः कल्मषक्षयान्नियोगनिष्ठस्य च रागादिक्षयो दृष्टानुश्रविकभोगेष्विति । तत्र यद्यपि कर्मविधिभिरान्वयिकं कार्यमाश्रितं तथाप्युत्तमाधिकारविधिना प्रासङ्गिकं कार्यमपेक्षितमिति तदेव प्राधान्येन विवक्ष्यते नैसर्गिकाभिनिवेशसिद्धं च भेदमाश्रित्य कर्मविधीनां प्रवृत्तेरविरोधः । यथा श्येनविधिः शास्त्रान्तरनिषिद्धं हिंसाविषये न हिंस्यात् सर्वभूतानीति मिथ्यादर्शिनं प्रतिषेधमतिक्रम्यावस्थितं पुरुषमाश्रित्य प्रवर्तते । दृश्यते च लोके मिथ्याविषय उपदेशस्तत्त्वज्ञानार्थपरः यथा किल कश्चिद्राजपुत्रः तस्करै(२)र्निषादराजाय निवेदितस्तेन चासौ पुत्रत्वेन परिगृहीतो म्लेच्छाचाराभिरतिरेवास्ते तं राजमन्त्री तत्रागत्य म्लेच्छजात्यनुगुणमेवाचारं कश्चिदनुवर्ण्य पश्चाद्राजपुत्रोऽसि त्वं न म्लेच्छपुत्र इति ग्राहिते समस्तम्लेच्छाचारं हित्वा स्वरूपमेव प्रतिपद्यत इति । तस्माद् वेदान्तानां प्रतिपत्तिनियोगपरत्वं न स्वरूपपरत्वमिति प्राप्ते ब्रूमः ।

## तत्तु समन्वयात् ॥ ४ ॥

(१) उन्नयन्ति – पा० २ । ३ पु० । (२) तस्करैरानीय – पा० २ । ३ पु० ।

तुशब्दः पूर्वपक्षं व्यावर्तयति। ब्रह्मस्वरूपं शास्त्रमवबोधयति न केवलं कार्यमेव कुतः समन्वयात्। समन्वितानि हि ब्रह्मस्वरूपप्रतिपादनपरत्वेन सृष्टिप्रकरणगतानि वाक्यानि सदेव सौम्येदमग्र आसीदात्मा वा इदमेक एवाग्र आसीत् तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्येवमादीनि। न च तेषां ब्रह्मपराणामर्थान्तरकल्पना युक्ता श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। न च कार्य एव प्रामाण्यं प्रतिपत्तुं युक्तं स्वरूपावबोधे ऽपि प्रामाण्यस्याविशिष्टत्वादपौरुषेयत्वं हि प्रामाण्ये कारणं तच्चाविशिष्टम्। अथोच्यते अग्निहोत्रादिवाक्येषु कार्यावगतिः प्रामाण्ये कारणमिति। तदयुक्तम्। चैत्यवन्दनवाक्ये ऽपि प्रसङ्गात्। अथापौरुषेयत्त्वे सत्यनपेक्षत्वात् प्रमाणता तदप्यनपेक्षत्वं वेदान्ते ऽपि तुल्यं लोके वेदे च पदानां स्वार्थप्रत्यायने ऽनपेक्षत्वमविशिष्टम्। वाक्यानां तु लौकिकानां स्वरूपे कार्ये वा प्रमाणान्तरापेक्षायां प्रामाण्यं तदभावे ऽप्रामाण्यं यथा खपुष्पं तिष्ठति खपुष्पं पश्येति वैदिकानामपौरुषेयत्वादनपेक्षत्वं प्रमाणान्तरानधिगतत्वाच्च मूलकारणस्य नापरिनिष्ठितत्वं कार्यत्वं वा प्रामाण्ये कारणं किं त्वनधिगतार्थगन्तृत्वम्। यथा हि प्रत्यक्षप्रमाणं सिद्धरूपावबोधकं तद्वत् सृष्टिवाक्यमपि भविष्यति। न च कार्यप्रतिज्ञायां तव प्रमाणान्तरवदिति दृष्टान्तोऽस्ति। यदुक्तं स्वरूपपरः प्रयोगो नास्तीति। तदपर्यालोचितवचनम्। कार्यवच्च स्वरूपे प्रयोगो दृश्यते नायं सर्पो रज्जुरेवेति नात्र विधिपदाध्याहारस्यावसरः रज्जुतत्त्वावबोधे हि भयं निवर्तते तदभावे विधिशतेनापि भयं न निवर्तते सम्पूर्णत्वाच्चापि वाक्यस्य नाध्याहारसम्भवः। यदा तु वादिना वाक्यं प्रयुज्यते प्रतिवादिनं प्रति नित्यः शब्दः तत्त्वेन प्रत्यभिज्ञानात् सामान्यवदिति तदपि वस्तुतत्त्वावबोधार्थं न तत्र विधिर्विद्यते हेतुबलात् तत्रार्थप्रतिपत्तिर्न विधिबलात् न्यायसहस्रप्रतिपादकं च भाष्यं न विधिपरम्। तथा क्व गतो देवदत्त इति पृष्टे तीर्थयात्रां गत इत्युत्तरम्। एवं तत्रतत्र द्रष्टव्यम्। ननु स्वरूपावबोधने सत्यपि किं कार्यमित्याकाङ्क्षा जायते। सत्यं कार्यवाक्ये ऽप्यपेक्षाऽविशिष्टा याहि माणवकेत्युक्ते किमर्थमिति पृच्छति भोक्तुमित्युत्तरं दीयते। स्वरूपपरं कार्यपरं वा वाक्यं किञ्चित् प्रयोजनमुद्दिश्य प्रयुज्यते न प्रयोजनशून्यमित्येतावानत्र नियमः प्रयोजनं च नियोग एवेति नास्ति नियमः। यथा कर्मकाण्डे स्वर्गादिप्राप्तिः फलमत्रा-

पवर्गप्राप्तिः फलमित्युपशाम्यतु भवान् । यच्चोक्तं कार्यपरेषु सम्बन्धग्रहणात् तत्रैव तेषां शक्तिर्नान्यत्रेति । तत्रोच्यते । यद्येवं कार्येऽप्यग्निहोत्रादौ तेषां शक्तिः सुदुर्लभा प्रत्यक्षानुमानपरिच्छिन्ने ऽर्थे लौकिके व्यवहारे शक्तिदर्शनात् । किं च सम्बन्धग्रहणकाले यद्यद्विशेषणं दृष्टं देशकालप्रयोक्त्रादि तत्सर्वं शक्तेर्नियामकं स्यात् । अथ

सम्बन्धग्रहणोपायः प्रत्यक्षादि यदिष्यते ।
कार्यं च तद्वदेवेति तन्न शक्तेर्नियामकम् ॥ इति ।

इतश्च कार्यमनियामकं नित्यत्वात् सम्बन्धस्य यस्त्वनित्योऽर्थः पाकादिकारकं सोऽनुरुध्यते । किं च

उपेयवेदनं यावदुपायानां प्रतीक्षणम् ।
उपेये तु विदिते नोपायान्तरमपेक्ष्यते (१) ॥

यथा रत्नपरीक्षाशास्त्रं रत्नस्वरूपसंवेदनार्थं स्वरूपे विदिते पश्चान्नोपायः पुनरपेक्ष्यते । किं चान्वयव्यतिरेकाभ्यां पदशक्तेर्विनिर्णयः प्रतिपदं च शक्त्यवगमो न पदसमूहस्य । ननु च पदान्तरापेक्षं तत् प्रयुज्यते ततश्च वाक्यस्यैव वाचकशक्तिर्नैकस्य पदस्य । अत्रोच्यते । मुखमस्तीति किं नाम न प्रलप्यते । यदि पदान्तरापेक्षा पदस्य वाचकशक्तिः स्यात् ततो गामानयेत्यत्र प्रयुक्तस्य गोपदस्य गां पश्येत्यत्र वाचकशक्तिर्न स्यादानयेतिप्रयोगाभावात् । ततश्च प्रतिवाक्यं सम्बन्धग्रहणायैव स्थातव्यं न व्यवहारः कश्चित् सिध्येत । किं चाश्वमानयेत्यानयेतिसन्निधानादश्वपदस्य गोत्वं वाच्यं स्यात् स्वतोऽर्थाभावात् । अथाश्वशब्दस्याश्वत्वं वाच्यमिति अभ्युपगम्यते गोशब्दस्य गोत्वं सिद्धं तर्हि प्रतिपदमर्थभेदो न पदान्तरसन्निधिर्निमित्तम् । शक्तिमतामेव पदानां सहप्रयोगः प्रयोजनापेक्षः कारकाणामिव काष्ठादीनाम् । न पदत्वसामान्य(२)गता वाचकशक्तिः सर्वत्र सर्वार्थप्रतीतिप्रसङ्गात् । अतः पदविशेषगता वाचकशक्तिः सा च प्रतिपदमन्वयव्यतिरेकसामार्थ्यादित्यतोऽभिधीयमानानां पदार्थानामन्वयो नान्विताभिधानं शक्तितोऽवस्थितम् । न च सर्वेषां पदानां कार्यं वाच्यं पर्यायत्वेन सहप्रयोगानुपपत्तेः तरुपादपशब्दवत् । अन्वयव्यतिरेकाभ्यां लिङादिप्रत्ययवाच्यत्वं कार्यत्वं कार्यस्यातो यत्र लि-

---

(१) नोपायः पुनरपेक्ष्यते – पा० २ पु० । (२) सामर्थ्यगता – पा० २ । ३ पु० ।

ङादयः प्रयुज्यन्ते तत्र कार्यपरः पदसमन्वयः यत्र तु प्रमाणान्तरानधिगतस्वरूपप्रतिपादनं न तत्र तत्पर इति द्रष्टव्यं न सर्वत्रैकरूपापादने खेदनीयं मनः । यदि च दुर्ग्रहबलेन सर्वत्र कार्यपरत्वं वर्ण्यते सर्वत्र सर्वशक्तीश्वरस्य तत्त्वं न सिध्यति कुतः

विध्यर्थवादमन्त्रात्मा त्रिधा वेदो व्यवस्थितः ।
स चेदिष्टः कार्यपरो न स्वरूपे प्रमाणता ॥

किं केन कथमिति त्र्यंशापेक्षो विधिः । त्र्यंशव्यतिरिक्तं(१) च नियोगो नाक्षिपति । शेषस्य वाक्यजातस्य सोऽरोदीदित्यादेः स्तुत्यर्थेन समन्वयः । मन्त्राणां च प्रयोगस्मारकत्वेन अतो निरतिशयानन्दब्रह्मस्वरूपप्रतिपादकप्रमाणाभावः । अथवा तत्परत्वमिष्यते कार्यपरता हीयेत । नोभयपरत्वं वाक्यभेदप्रसङ्गात् । तस्मादवश्यं स्वरूपपरत्वमेवेष्टव्यमीश्वरमिच्छतेति । षष्ठश्च प्रपाठको जगत्कारणप्रतिपादनपरत्वेनानेकैर्दृष्टान्तैः पर्यवसितः तद्धास्य(२) विजिज्ञासुरित्युपसंहारात् ।

वाक्यतात्पर्यतः कल्प्यमत्यन्तातीन्द्रियं यदि ।
तात्पर्यं किमभिप्रेतं तच्छब्देन किमुच्यते ॥

नियोगस्य वाक्यार्थत्वेनाभ्युपगमात् समस्तस्य पदजातस्य तत्परत्वं प्रसज्यते । प्रपञ्चविषयश्च नियोगो निष्प्रपञ्चं ब्रह्म तयोः परस्परविरोधादसम्बन्धः अंशत्रयव्यतिरिक्तत्वाच्च ब्रह्मतत्त्वं नियोगसिद्धौ नापेक्ष्यते ऽनुष्ठातृभिः । न च नियोगस्य वाक्यार्थत्वे मीमांसायां भाष्याक्षरं शारीरके वा सूत्राक्षरं सूचकमस्ति । भावनायास्तु पुरुषप्रयत्नरूपाया वाचकं भाष्याक्षरं सूत्राक्षरं च विद्यते । भाष्याक्षरं तावत् ये प्राहुः किमपि भावयेदिति ते स्वर्गकामपदसम्बन्धात् स्वर्गं भावयेदिति ब्रूयुरिति भावार्थाधिकरणे स्पष्टम् । सूत्राक्षरमपि कृतप्रयत्नापेक्षस्त्विति । शरीरेन्द्रियमनसामात्माधिष्ठितानां चेष्टाविशेषः प्रयत्नः सर्वधात्वर्थसाधारणः धात्वर्थास्तु परस्परं भिद्यन्ते प्रयत्नस्तु न भिद्यते नदीसन्तरणकाष्ठभेदेन गमनादिषु विस्पष्टमसौ लक्ष्यते स एव च साध्यत्वाद्वाक्यार्थो लोकवेदयोः नियोगस्तु तटस्थो रागादिवत्प्रवृत्तौ निमित्तमात्रं न वाक्यार्थ इति स्थितम् । यदुक्तं वेदान्तानां कर्तृप्रतिपादनपरत्वं वा जपार्थत्वं वेति । तदेवं सति निरस्तम् ।

(१) व्यतिरेकं – पा० २ पु० । (२) तत्त्वस्य – पा० २ पु० ।

न हि जगत्कारणं ब्रह्म कर्मसु कर्तृत्वेन नियुज्यते जीवस्तु नियुज्यते तस्य चास्तित्वं प्रत्यक्षेणात्मवादे(१) साधितमिति न वेदान्तवाक्यापेक्षा। प्रकरणाद्यभावाच्च न कर्मशेषत्वं वेदान्तानाम्। यदप्युक्तं कर्मविधीनां कार्यद्वयमान्वयिकं प्रासङ्गिकं चेति। तदुत्प्रेक्षामात्रम्। आन्वयिकमेवैकं कार्यं श्रुतत्वात्। त्र्यंशापेक्षो हि विधिः फलांशं करणांशमितिकर्तव्यतांशं चापेक्षते। परिपूर्णे च त्र्यंशे विधिः परिसमाप्तः कथं कार्यान्तराय कल्पते न च नैसर्गिकप्रपञ्चोपरमः कर्मानुष्ठानमात्रेण भवति यदा ज्योतिष्टोमादिषु प्रवर्तते तत्रापि यजमानर्त्विग्ग्रहचमसादिप्रपञ्चोऽस्त्येव चक्षुरादिभिश्च रूपादिदर्शनस्य कचित्(२) प्रपञ्चस्योपरमः कस्यचिदुद्भव इति न प्रपञ्चोपरमः प्रयोजनं दृश्यते न च कर्मणि प्रवृत्तानां त्रिवर्गपराणामात्मज्ञानोत्पत्तेः प्रागवस्थायां वर्तमानानां दृष्टादृष्टविषयोपयोगश्च निवर्तते कर्मिणां तु सुतरां रागो विवर्धते। तथा चोक्तं भगवता। भोगैश्वर्यप्रसक्तानामिति। श्रुतिरपि। यत् कर्मिणो न प्रवेदयन्ति रागादिति। तस्मात् प्रसङ्गिकं फलमेवासिद्धम्। यद्यप्यस्ति तथाप्यविवक्षितं यश्चार्थाद्र्थो न स चोदनार्थ इतिन्यायात्। तथा च स्तुतिशास्त्राधिकरणे स्तौतिसंशात्योः(३) श्रुतमपूर्वमेव प्रयोजनं देवतास्मरणं प्रासाङ्गिकमिति स्थितम्। ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति च गार्हपत्योपस्थानं प्रयोजनं गम्यमानमिति नेन्द्रोपस्थानम्। यथा च प्रकृतिर्विकृतिं नापेक्षते परिपूर्णत्वात् विकृतिश्च पुनः प्रकृतिमपेक्षते ऽपरिपूर्णत्वात्। एवं पूर्वो वेदभागः परं नापेक्षते स पुनः पूर्वमपेक्षते। वेदान्तवाक्यैरेव ज्ञानसहकारितया नित्यकर्मोपदेशात् तमेतं वेदानुवचनेनेति। ततश्चात्मज्ञानाधिकृतस्य कर्मभिर्विनापवर्गानुपपत्तेः ज्ञानेन कर्म समुच्चीयते। यत् पुनः केवलकर्मिभिः क्रियमाणं कर्म पुरुषयोग्यतापादनद्वारेणोत्तमाधिकारविधिशेषत्वं प्रतिपद्यते। तदुत्प्रेक्षामात्रेण कल्पितम्। न च लौकिकेन दृष्टान्तेन वैदिकोऽर्थो निरूपयितुं शक्यते ऽनुमानादीनामविषयत्वात्। यदप्युक्तं भेदाभेदयोर्विरोध इति। तदभिधीयते अनिरूपितप्रमाणप्रमेयतत्त्वस्येदं चोद्यम्।

एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते।
नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते॥

(१) प्रत्यगित्यात्मवादे – पा० १ पु०। (२) क्वचित् कस्यचित् – पा० २।३ पु०।
(३) स्तौति संशयः – पा० २ पु०।

यत् प्रमाणैः परिच्छिन्नमविरुद्धं हि तत् तथा ।
वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते ॥

न ह्यभिन्नं भिन्नमेव वा क्वचित् केनचिद् दर्शयितुं शक्यते । सत्ताज्ञेयत्वद्रव्यत्वादिसामान्यात्मना सर्वमभिन्नं व्यक्तात्मना तु परस्परवैलक्षण्याद्भिन्नम् । तथाहि

प्रतीयते तदुभयं(१) विरोधः कोऽयमुच्यते ।
विरोधे चाविरोधे च प्रमाणं कारणं मतम् ॥
एकरूपं प्रतीतत्वात् द्विरूपं तत् तथेष्यताम् ।
एकरूपं भवेदेकमिति नेश्वरभाषितम् ॥

ननु शीतोष्णयोर्यथा परस्परं विरोधस्तथा भेदाभेदयोः किमिदमुच्यते नास्ति विरोध इति । अत्रोच्यते । भवतः प्रज्ञापराधोऽयं न वस्तुविरोधः कथं सहानवस्थानं छायातपवद्भिन्नदेशवर्तित्वं च शीतोष्णवद्विरोधो नाम एतदुभयमिह कार्यकारणयोर्ब्रह्मप्रपञ्चयोर्नास्ति तदुत्पत्तेस्तत्रैवावस्थितेस्तत्रैव प्रलयात् । विरोधे हि त्रयमेतन्नोपपद्यते । न हि कृशानुनाङ्कुरोत्पत्त्यादिलक्षणः सम्बन्धो दृश्यते । कारणेन हि मृत्सुवर्णादिना कार्यं सर्वदानुस्यूतं दृश्यते । तत्राक्षिणी निमील्य परस्परासङ्गतिलक्षणो विरोधो वैयात्याद्(२) वक्तव्यो भवेत् प्राथमिकश्रोत्रियश्रोत्रप्रतारणार्थं वा । शीतोष्णयोर्भिन्नाधारवर्तिनोर्न कदाचिदुत्पाद्योत्पादकलक्षणः सम्बन्धो नाधाराधेयलक्षण इति युक्तस्तयोः परस्परं विरोधः । तस्माच्छीतोष्णवदित्ययुक्तं दृष्टान्ताभिधानम् । अत्र प्रागल्भ्यात् कश्चिदाह । यथा संशयज्ञानं स्थाणुर्वा पुरुषो वेत्यप्रमाणं तथा भेदाभेदज्ञानमिति । तदसत् ।

परस्परोपमर्देन न कदाचित् सहस्थितिः ।
प्रमेयानिश्चयाच्चैव संशयस्याप्रमाणता ॥

अत्र पुनः कारणं पूर्वसिद्धं मृत्सुवर्णादिलक्षणं ततः कार्यं पश्चाज्जायमानं तदाश्रितमेव जायते । कारणसमानार्था हि कार्यबुद्धिर्न कारणस्वरूपोपमर्देन देशतः कालतो वा पृथग्भूतं कार्यं दृश्यते । तस्माद् यत्किञ्चिदेतत् यत् प्रपञ्चे मिथ्यात्वप्रातिज्ञानम् । न

(१) चेदुभयं – पा० २ । ३ पु० । (२) वैजात्यात् – पा० २ पु० ।

च पुरुषापेक्षया मिथ्यात्वं सत्यत्वं वा प्रपञ्चस्य कल्पयितुं शक्यं मुमुक्षून् प्रति मिथ्या इतरान् प्रति सत्यमिति। न हि रूपमन्धान् प्रति असत्यमितरान् प्रति सत्यमिति शक्यं वक्तुम्। न हि पुरुषस्वरूपानुरोधिनो भावा येन तदपेक्षया सत्यत्वमसत्यत्वं वा भजेरन्। तथा च

नरभेदान्न हि ज्ञेया वस्तुनः सदसत्यता।
न हि रूपमनन्धानां सत्यमन्धेष्वसद् भवेत्॥

यथा सहस्ररश्मिः स्तुवन्तं निन्दन्तं च तपति। किं च मुमुक्षून् प्रत्यवस्तुत्वमितरान् प्रति वस्तुत्वमिति युगपत् तथ्यमिथ्यात्वप्रसङ्गः। किं च

प्रपञ्चास्तित्वमज्ञस्य तस्यैव ज्ञानिनः पुनः।
स एव किल नास्तीति कथं सह्यं(१) वचो भवेत्॥
न हि द्विचन्द्रः प्रागासीत् पश्चान्नास्तीति युज्यते।
द्विचन्द्रज्ञानतुल्यत्वं प्रत्यक्षादेस्त्वपेक्ष्यते॥

मिथ्यात्वं किलागमेन प्रत्यक्षादिज्ञानस्य प्रतिपाद्येत इत्यभ्युपगमात् सर्वदैवं मिथ्यात्वं द्विचन्द्रज्ञानवदिति युक्तमभ्युपगन्तव्यं बाल्यं त्वर्द्धजरतीयन्यायाश्रयणम्। यथागमेनापि मिथ्यात्वं न प्रतिपाद्यते तथा तदनन्यत्वमित्यत्र वक्ष्यामः। न च तिमिरवत् प्रपञ्चमिथ्यात्वे कारणदोषो गृह्यते। अतो भिन्नाभिन्नरूपं ब्रह्मेति स्थितम्। सङ्ग्रहश्लोकः।

कार्यरूपेण नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा॥ इति।

वेदान्ते निपुणम्मन्यः कश्चिदाह। अविद्या(२) कारणदोष इति। यद्येवमविद्यावतां यदुत्पन्नं ज्ञानं तच्चेन्मिथ्येत्यभ्युपगम्यते ब्रह्मज्ञानमपि मिथ्या स्यादविशेषात् अविद्यावानेव हि श्रोता तत्त्वमस्यादिवाक्यश्रवणे ऽधिक्रियते। यदि च तस्याविद्या नास्ति श्रवणमननविधानमनर्थकं स्यात्। अतश्च मूलोच्छेदात् सत्यवादप्रसङ्गः। का चेयमविद्या भवतोऽभिप्रेता। किं भेददर्शनमुत तद्व्यतिरिक्तेति। यदि तावद्भेददर्शनमविद्याभ्युपेयेति तत्रेदं वक्तव्यं कथं भेददर्शनस्याविद्यात्वम्। किं विद्या-

(१) ग्राह्यं – पा० २। ३ पु०। (२) अथाप्यविद्या – पा० २। ३ पु०।

तोऽन्यत्वादविद्या अथ विद्याया अभाव इति । न तावदभावः संवेदनत्वस्य प्रत्यक्षत्वात् । इयांस्तु विशेषः परविद्याऽपरविद्या चेति । तथा चोक्तम्। द्वे विद्ये वेदितव्ये परा चैवापरा चेति । न च पर्युदासः सम्भवति । न हि भेदज्ञानं द्रव्यं गुणः क्रिया वा येन विद्यातोऽन्यत् स्यात् । विद्येति ज्ञानमुच्यते भेदज्ञानमपि ज्ञानमेवेति अथ तद्विपरीताऽविद्या तत्रापि किं नित्या अनित्या वा सा च ब्रह्मणः किं जीवस्येति । यद्यनादिरविद्या तदानीमनिर्मोक्षप्रसङ्गः तस्या उच्छेत्तुमशक्यत्वात् ब्रह्मवत् । अथादिमती कुतः सा जायते यदि चोत्पद्येत कार्यत्वाद्वस्तुत्वप्रसङ्गः। तत्रावस्तुभूताऽविद्येति प्रतिज्ञा(१) हीयते। न ह्यवस्तु शशविषाणमुत्पद्यते। न च ब्रह्मणोऽविद्या तस्य विशुद्धचिद्रूपत्वान्निरतिशयानन्दरूपत्वात्। न च जीवस्य ब्रह्मव्यतिरिक्तजीवानभ्युपगमात् । प्रतिविम्बरूपस्य च जीवस्य कल्पितस्यावस्तुत्वात्। हन्त निराश्रयाऽविद्याभावपदवीं प्राप्ता। तस्मान्न भेददर्शनमविद्या। नापीश्वरस्य किं तर्हि जीवस्य वस्तुभूतस्य देहादिष्वनात्मसु विपरीतज्ञानं ब्रह्मस्वरूपाप्रतिपत्तिश्च तदुभयं ग्रहणाग्रहणमविद्या सा तत्त्वमस्यादिवाक्यश्रवणजनितया विद्यया निवर्तते न प्रपञ्चदर्शनं ब्रह्मकार्यत्वात् प्रपञ्चस्य वस्तुत्वं ब्रह्मैव हि कारणात्मना कार्यात्मना वावस्थितमित्युक्तम्। न हि ब्रह्मविषयं ज्ञानं मिथ्या भवितुमर्हति । यद्येवं प्रपञ्चसत्यत्वे कथं भवत्पक्षे मोक्ष इति। यस्यापि प्रपञ्चो मिथ्या तस्यापि कथं मोक्ष इति वक्तव्यम्। यथा स्वप्नप्रपञ्चो निवृत्तोऽपि पुनःपुनरुत्पद्यते तथा जाग्रत्प्रपञ्चोऽपि मुक्तस्याप्युत्पद्येत यथा सुषुप्तिप्रलययोस्तिमिररूपावस्थिताऽविद्या पुनः प्रपञ्चहेतुः तद्वदनवस्थायिनी च विद्या प्रदीपज्वालावत् तस्यां ध्वस्तायां तमोवदविद्या पुनरुत्तिष्ठेत् । ननु ज्ञानेनोन्मथितस्य कथं पुनरुत्पत्तिः। अत्रोच्यते । कथमुन्मथनं मतं ज्ञानस्यापि प्रपञ्चत्वात् न प्रपञ्चेन प्रपञ्चोन्मथनं सम्भवति तुल्यशक्तित्वात् । अथात्मरूपं ज्ञानं यद्येवं सर्वदात्मरूपस्यावस्थितत्वात् प्रपञ्चप्रतिभासनानुपपत्तिः तमस इव प्रदीपसन्निधौ । ततश्च संसाराभावान्नित्यमुक्तिप्रसङ्गः । तस्मादागमेन बन्धमोक्षव्यवस्था वक्तव्या न तर्केण अनवस्थितत्वात् । अस्मत्पक्षे मुक्तः सर्वात्मा भवति सर्वतः । तथा चाह । सर्वात्मा

(१) विवक्षाप्रतिज्ञा – पा० २ पु० ।

भवति सर्वज्ञः सर्वमेवाविवेशेति । तद्धैतत्(१) पश्यन्नृषिर्वामदेवः प्रतिपेदे ऽहं मनुरभवं सूर्यश्चेति मुक्त्यवस्थायामपि पूर्ववत् प्रपञ्चसद्भावं दर्शयति । अत्राह अस्तु तर्हि केवलादेव ज्ञानान्मुक्तिः कर्मनिरपेक्षात् । चतुर्विधं हि कर्मकारकमुत्पाद्यं प्राप्यं विकार्यं संस्कार्यं चेति । न तावन्मोक्षाख्यं ब्रह्मस्वरूपमुत्पाद्यमनित्यत्वप्रसङ्गात् अतो नोत्पत्त्यर्थमग्निहोत्रादिकर्म नापि कर्मणा ब्रह्माप्यते सर्वगतत्वेन नित्याप्तस्वरूपत्वात् । न च क्रियया विक्रियते चर्मवदनित्यत्वप्रसङ्गात् । नापि संस्क्रियते नित्यस्यातिशयासम्भवात् । अतः कार्यानुप्रवेशो न शक्यते व्युत्पादयितुमिति । अत्रोच्यते । सत्यं त्रिविधं कर्म न सम्भवतीत्याप्यं तु न शक्यते निरसितुम् । यथैव ज्ञानेनाविद्यानिवृत्तिद्वारेण ब्रह्मस्वरूपमवाप्यत इत्यभ्युपगम्यते । तथा कर्मसहितेनेत्यभ्युपगन्तव्यं यज्ञेन दानेनेतिविनियोगात् । यदि च नित्यप्राप्तो मोक्षः स्यादयत्नेन सिद्धत्वात् सर्वो लोको मुच्येत । अथाविद्याव्यवधानात् तन्निवृत्तिद्वारेण तन्निवृत्तिश्च विद्यया विरोधादिति मन्यसे । अत्रोच्यते । तद्विपरीतं ते प्रसज्यते भेदविज्ञानमविद्या भवतोऽभिप्रेता न तद्ध्रियमाणशरीरस्य कस्यचिद्भेदज्ञानं विनिवर्तते चक्षुरादीनां तन्निमित्तत्वात् । न च निमित्ते सति नैमित्तिकं न भवति कर्मणां तद्भोगार्थत्वात् । कथं भोगार्थत्वं देहेन्द्रियविषयविभागज्ञानहेतुत्वात् । अपि चेतरेतरहेतुत्वमविद्याकामकर्मणां बीजाङ्कुरवद्यतः संस्कारचक्रमविरलमनुवर्तते ततश्चाद्वैतज्ञानं बाध्यतामेति प्रतिपक्षबलीयस्त्वादपवर्गाभावः प्रसज्यते । न च बाध्यमानाकारं भेदज्ञानं तिष्ठतीति शक्यते अनुन्मत्तेन वक्तुं स्थितिनिमित्ताभावात् । निमित्तसद्भावे हि निवृत्तमपि मिथ्याज्ञानं पुनरुत्पद्यते । द्विचन्द्ररज्जुसर्पादौ भ्रान्तित्वेन निश्चिते प्रवृत्तिर्नोपपद्यते । दृश्यते च शौचाचमनव्याख्यानभोजनादौ क्षुत्पिपासयोरनिवृत्तत्वात् तत्प्रेरितोऽस्वतन्त्रः प्रवर्तते । बाधितकल्पं चाज्ञानमिति स्वानुभवविरुद्धं ब्रुवन्नुन्मत्तान्न विशिष्यते । न चाविद्यायाः सावशेषत्वं शक्यं कल्पयितुमवस्तुत्वात् । न हि शशविषाणस्य सावशेषत्वं निरवशेषत्वं वास्ति । यदि च भेदज्ञानं सर्वात्मना निवर्तेत सम्प्रदायविच्छेदः स्यात् । असिद्धश्चायं हेतुर्विरोधादिति । मनुव्यासयाज्ञवल्क्यादीनामुपदेशकर्तृ-

(१) तद्वैतत् – पा० १ पु० ।

त्वोपलब्धेः । शब्दादिभेदप्रतिभासे हि सम्प्रदायोपपत्तिः । तद्धैतत् पश्यन्निति च युगपदुभयानुवृत्तिश्रुतेः । निःसम्बोधो निरास्वादस्त्वत्पक्षे मोक्षः स्यात् चैतन्यमात्रावशेषत्वात् वदन्ति केचित् शृगालत्वं वने वरमिति । अस्मत्पक्षे तु न भेदज्ञाननिवृत्तिरविद्यानिवृत्तिः किं तर्हि शरीरादावनात्मन्यात्मबुद्धिनिवृत्तिः तत्र च सिद्धो हेतुस्तन्निवृत्तौ शरीरपातादनन्तरं सर्वज्ञः सर्वशक्तिर्निरतिशयसुखसंवेदी मुक्तो भवतीति निरवद्यम् । अपि चानेकजन्मसञ्चितानां कर्मणामारब्धानारब्धफलानां कथं तन्निवृत्तिर्ज्ञानविरोधाभावात् । बन्धकारणत्वादपवर्गहेतुज्ञानेनास्ति विरोध इति चेत् कथं बन्धहेतुत्वमवगतम् । शास्त्रादिति चेत् तर्हि आगतोऽसि मदीयं पन्थानं(१) कुतस्ते ऽविद्यामात्रवादिनस्तद्व्यतिरिक्तं कर्म तद्विभागो वा अबाह्यार्थवादित्वात् । अस्मत्पक्षे तु युज्यते । यथा शास्त्रान्नित्यकर्मसमुच्चितादात्मज्ञानादविद्याकामकर्मलक्षणबन्धनिवृत्तिस्तथा यज्ञादिश्रुतेरश्ववदित्यत्र दर्शयिष्यामः ॥ ४ ॥

सांख्यास्तु त्रिगुणमचेतनं प्रधानं जगत्कारणमनुमीयते तत्रैव वेदान्तवाक्यानि योजयन्तः प्रत्यवतिष्ठन्ते । चेतनस्य ब्रह्मणो जगत्कारणत्वे यत् प्रतिज्ञातं शास्त्रयोनित्वं सदेव सौम्येदमग्र आसीदित्यादिवाक्यसमन्वयात् । तदसिद्धम् । सच्छब्दो वस्तुमात्रवाची प्रधाने ऽप्युपकल्पते । अतो न चेतनं जगत्कारणमिति प्राप्ते ब्रवीति ।

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

न प्रधानं जगत्कारणमशब्दं हि तत् । न विद्यते शब्दः श्रुतिर्यस्य तदशब्दं कस्मादीक्षतेरीक्षणश्रवणात् तदैक्षत बहु स्यां प्रजायेयेति । ईक्षतेरिति धात्वर्थनिर्देशो लक्षणया न धातुनिर्देशो यथेतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् । ईक्षणं पर्यालोचनमध्यवसायः प्रत्यक्षं तदचेतनस्य नोपपद्यते ॥ ५ ॥

अत्राह गौणमीक्षणं भविष्यत्यचेतने ऽपि चेतनवदुपचारदर्शनात् । यथा आसन्नपतनं कूलमालक्ष्य कूलं पिपतिषतीति प्रयुज्यते तथा प्रधाने प्रत्यासन्नसर्गे नियमेन प्रवृत्तिमालोक्य चेतनोपचारो भविष्यति । भवति चेहाप्यचेतनयोरप्तेजसोरुपचारः तत् तेज ऐक्षतेति(२) । तस्माद्गौणमीक्षणम् । अत्र प्रतिविधत्ते ।

---

(१) यत् स्थानं – पा० १ पु० । (२) तत् तेज ऐक्षत ता आप ऐक्षन्त यजतिषु येयजामहं कुर्यान्नानुयाजेषु – पा० ३ पु० ।

कानुद्दिश्य सृजेन्मायां माया तावानर्थिका ।
संसारितां कथं कुर्यादात्मनः स्वयमिच्छया ॥
स्वयंनिर्मितमायात्मा वेदान्तश्रवणादिना ।
ज्ञानं प्राप्नोति मुक्त्यर्थं सर्वज्ञ इति कः क्रमः ॥
सर्वोपाधिविनिर्मोको युगपन्न हि सम्भवेत् ।
एकोपाधिविनिर्मोके को लाभः(१) परमात्मनः ॥
देहान्तरेषु दुःखित्वं यदि वाभ्युपगम्यते ।
एकोपाधिनिवृत्त्यर्थः क्लेशस्ते निःप्रयोजनः ॥
तेषु चेन्नास्ति(२) दुःखित्वं क्लेशस्ते निःप्रयोजनः ।
कृमिकीटाद्युपाधीनामनन्तत्वान्न शक्यते ॥
तस्मात् स्वतन्त्रः सर्वज्ञः सर्वशक्तिर्निरञ्जनः ।
ईश्वरोऽभ्युपगन्तव्यो जगत्सृष्टिलयश्रुतेः ॥

अन्ये तु स्वयमुत्प्रेक्षितदर्शनाः प्राहुः । अपहतपाप्मादिरूपमात्मतत्त्वं कर्तव्यम श्रवणमननादिनियोगानुष्ठानेन । स च नियोगः प्रपञ्चप्रविलापनमापादयतीति सुसिद्धार्थमेवेति । तदेतदपेशलमुक्तमस्माभिः । प्रपञ्चप्रविलापनमशक्यं पुरुषमात्रेण कर्तुमिति । यदि चात्मतत्त्वमपहतपाप्मादिरूपं क्रियते अनित्यत्वं प्राप्नोति घटादिवत् । न च प्रपञ्चप्रविलापने ऽन्यस्मिन् कृते वस्त्वन्तरमात्मतत्त्वं भवति । न हि प्रदीपेनान्धकारापनये कृते घटः कृतो भवति । यथा वा घटस्य विनाशे कृते नाघटविनाशः कृतो भवति । अर्थत्वात् । एवमत्रापि । न च नियोगः प्रविलापनमापादयतीति शक्यते वक्तुम् । तस्याकारकत्वात् । न च तस्य प्राबल्यो ऽश्रुतत्वात् । यदुत्प्रेक्षितमात्मना तत्सर्वं नियोगमस्तके ऽध्यारोप्य व्यवह्रियते । यदि तावन्नियोगः शब्दात्मको लिङादिप्रत्ययः स पुरुषव्यापारकर्तव्यतामात्रं ज्ञापयति यजेत जुहुयादिति । अथ प्रमेयरूपो नियोगः तस्य का गतिः स्वयं प्रमेयत्वात् प्रमाणरूपता तस्य कल्पयितुमशक्या प्रमाणाभावात् । यदप्युच्यते । प्रपञ्चस्य मिथ्यात्वमागमादवगम्यते । स्वत एव तु प्रत्यक्षादीनां प्रामाण्यमिति । तदप्यसत् । सर्वत्र हि परत एव मिथ्यात्वं गृह्यते न

---

(१) कोऽल्पज्ञः — पा० २ पु० ।
(२) तेषु चेदास्ति — पा० २ पु० । तेषु चात्मास्ति — पा० ३ पु० ।

स्वतः । यथा शुक्तिकाज्ञानेन रजतज्ञानस्य मिथ्यात्वं न तेनैव तस्य गृह्यते । शास्त्रेण चेत् प्रत्यक्षादीनां मिथ्यात्वं परिच्छिद्यते । तस्य नित्यत्वात् प्रपञ्चमिथ्यात्वं सर्वदैव स्यात् । न विद्वदविद्वदपेक्षया सत्यत्वं मिथ्यात्वं वा । न हि पुरुषैर्भावाः क्रियन्ते येन तद्वशादवतिष्ठेरन् । द्रष्टारो हि ते सत्यामालोकेन्द्रियसामग्र्यां दर्शनं निष्पाद्यन्ते । तदभावे नास्तीत्यलमितिप्रसङ्गेन । छान्दोग्ये च तत्रतत्रानयोर्मायाप्रविलयवादिनोर्निराकरणं विस्तरेण कृतमित्युपसंह्रियते । यदुक्तं विज्ञानघन एवैतेभ्यो भूतेभ्य इति विज्ञानैकरसः शरीराकारपरिणतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुभूतानि विनश्यति तत्कृतमौपाधिकं रूपं विजहातीत्यर्थः । प्रेत्य विशेषसञ्ज्ञा निवर्तते मुक्तः परमात्मा भवतीति समुदायार्थः । विज्ञातारमित्यपि सर्वस्य विज्ञातारं परमात्मानं केनाप्यन्तरेण करणेन वा विजानीयादित्यर्थः । न हि मुक्त्यवस्थायामात्मान्तरं करणान्तरं वास्ति ॥ २१ ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २२ ॥

उक्तं प्रधानं जगत्कारणं न भवति किं तु ब्रह्मैवेति । तत्रेदमाक्षिप्यते । चेतनानामीश्वराणां राजवैवस्वतप्रभृतीनां निमित्तकारणत्वमेव दृष्टं नोपादानकारणत्वम् । अचेतनानां मृदादीनां तु दृष्टं तच्च निरस्तं भवता तदिदानीं बलादेष्टव्यम् । अन्यथा सर्गानुपपत्तेरिति प्राप्ते ऽभिधीयते । प्रकृतिरुपादानकारणं चशब्दान्निमित्तकारणं च कुतः प्रतिज्ञादृष्टान्तयोरनुपरोधादबाधनात् । यदि ब्रह्मैवोपादानकारणं ततस्तदुक्तमुपपद्यते । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवतीति । यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवतीति कार्यकारणयोरनन्यत्वात् । कारणानुस्यूतमेव हि कार्यमतोऽवगते हेतौ कारणे कार्यं सामान्येनावगतं भवतीति विज्ञानव्याप्तिः कार्यस्योच्यते । श्रुत्या न प्रविलयः तत्र यत्केनचिदुक्तं प्रविलयमानः प्रपञ्चो विज्ञातो भवतीति तत्स्वबुद्ध्युत्प्रेक्षितामित्युपेक्षणीयम् । न चानुमानेनास्माभिर्जगत्कारणं वर्ण्यते येन राजादिदृष्टान्तमपेक्षामहे ॥ २२ ॥

## अभिध्योपदेशाच्च ॥ २३ ॥

इतश्चोपादानम् । तदैक्षत बहुस्यां प्रजायेयेति बहुभवामीति सङ्कल्पपूर्विका प्रवृत्तिरभिध्यानम् ॥ २३ ॥

## साक्षाच्चोभयाम्नानात् ॥ २४ ॥

इतश्च सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्ययन्तीत्युत्पत्तिप्रलययोराम्नानाद्यतश्च यदुत्पद्यते तत्रैव तत् प्रलीयते यथा पृथिव्यां भूतग्रामः ॥ २४ ॥

## आत्मकृतेः परिणामात् ॥ २५ ॥

इतश्च तदात्मानं स्वयमपकुरुतेत्यात्मनः कृतिः करणं कर्तृत्वेन कार्यत्वेनात्मा निर्दिश्यते । कथं पुनरात्मनः करणं सम्भवतीत्याह । परिणामादिति । परमात्मा स्वयमात्मानं कार्यत्वेन परिणमयामासेत्यर्थः । शक्तिविक्षेपं कृतवान् । अनन्ता हि तस्य शक्तयोऽचिन्त्याश्च । तासां विक्षेपं करोति सृष्टिस्थितिकाले यथा सूर्यो रश्मीनां तद्वदेव संहरति । तथा च मन्त्रवर्णः श्वेताश्वतराणाम् ।

न तस्य कार्यं कारणं च विद्यते
न तत्समश्चाप्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥ इति ।

ननु च न जायते ऽजो नित्य इत्यजत्वं श्रूयते । न दोषः परतो जन्मप्रतिषेधाच्चतुर्मुखादिवत् । तदुक्तम् । न तस्य कश्चिज्जनिता न चाश्रय इति । तस्मात् स्वतन्त्रस्य शक्तिविशेषोपसंहारौ न विरुद्धौ सूत्रकारः श्रुत्यनुकारी परिणामपक्षं सूत्रयांबभूव अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां सम्प्रदायमतः समाश्रितः । तथा च वाक्यं परिणामस्तु स्याद् दध्यादिवदिति विगीतं विच्छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो(१) लोकान् व्यामोहयन्ति ॥ २५ ॥

---

( १ ) माहायानिकबौद्धगन्धितं मायावादं मायावादिनो व्याकर्णयन्तो – पा० २ पु० ।

## योनिश्च हि गीयते ॥ २६ ॥

हीति हेतौ । कर्तारमीशं पुरुषं ब्रह्मयोनिमिति । तथा यद्भूतयोनिं योनिरुपादानकारणं पृथिवी योनिरौषधीनामिति दर्शनात् ॥२६॥

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २७ ॥

एतेन प्रधाननिराकरणन्यायेन सर्वे परमाण्वादिकारणवादा हेयतया व्याख्याता वेदितव्याः । द्विरभ्यासोऽध्यायसमाप्तिद्योतनाय ॥२७॥

इति भगवद्भास्कराचार्यप्रणीते(१) शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ।

समाप्तश्च प्रथमोऽध्यायः ।

(१) वर्धिते – पा० १ पु० ।

ॐ नमः परमात्मने ।

# भास्करीयब्रह्मसूत्रभाष्ये

## द्वितीयाध्याये प्रथमः पादः ।

---

### स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

प्रथमाध्याये सर्वज्ञं सर्वशक्ति ब्रह्म जगतः कारणमिति प्रतिपादितम् । स्मृतिन्यायविरोधपरिहारः परदर्शनानां च तर्काभासविजृम्भितत्वं सृष्टिश्रुतीनां परस्परं विप्रतिपत्तिसमाधानमित्यस्यार्थजातस्य प्रतिपादनार्थं द्वितीयोऽध्याय आरभ्यते । अत्र सांख्याः प्रत्यवतिष्ठन्ते । यदि ब्रह्मैवोपादानकारणं निमित्तकारणं च ततः कपिलमहर्षिप्रणीतषष्ठितन्त्राख्यस्मृतेरनवकाशो निर्विषयत्वं स एव दोषस्तस्य प्रसङ्गो मन्वादिस्मृतीनां तु धर्माधर्मप्रतिपादनार्थत्वादानर्थक्यं नास्ति । अस्यास्तु स्मृतेः तत्त्वावबोधविषयत्वात् तदसम्भवे प्राप्तमनवकाशत्वम् । तस्मात् प्रधानमेव उपादानकारणमभ्युपगन्तव्यम् । श्वेताश्वतरश्रुतिश्च कपिलमाहात्म्यं दर्शयति ऋषिप्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येदिति तीर्थकरस्य कपिलमहर्षेः सम्यग्दर्शितत्वात् तन्मन्त्रानुसारेण वेदान्तार्थावधारणं कर्तव्यं न स्वतन्त्रतयेत्यभिप्रायः । एवं प्राप्ते प्रतिविधीयते । नैतदेवमन्यस्मृत्यनवकाशदोषप्रसङ्गादिति । स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलमेव दर्शनीयमिति ।

शक्त्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ।
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ॥

इतीतिहासे ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।

यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥
ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥
अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा ॥

इति गीतायामन्योन्यविरोधे च श्रुत्यनुसारिणी स्मृतिरुपादेया । श्रुतौ च चेतनं जगद्बीजमुक्तं तद्विरुद्धा स्मृतिरप्रमाणम् । तदुक्तं प्रमाणलक्षणे । विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति । श्रुतिस्मृतिविरोधादियं स्मृतिः कपिलस्येति स्थितम् । या पुनः श्रुतिरुदाहृता तत्र कपिलशब्देन हिरण्यगर्भः सवितृमण्डलावस्थाऽभिधीयते कनककपिलवर्णत्वात् । तथा चोक्तं पुराणे । आदित्यसंस्थः कपिलोऽग्रजोऽग्निरिति । तस्यामेव श्रुतावुक्तम् । हिरण्यगर्भं जनयामास पूर्वं मनोबुद्ध्या शुभया(१) संपुनन्त्विति । न ह्यपरपुरुषापेक्षा श्रुतेः स्वतः प्रामाण्यात् ॥ १ ॥

## इतरेषां चानुपलब्धेः ॥ २ ॥

इतश्च सांख्यस्मृतिर्नादर्तव्या प्रधानादितरेषां महदहङ्कारतन्मात्राणां लोकवेदयोरनुपलब्धेर्महाभूतप्रकृतित्वेन बुद्धिरन्तःकरणं तद्धर्मश्चाहङ्कारः प्रसिद्ध एव ॥ २ ॥

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

इदमतिदेशसूत्रम् । एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रत्युक्ता वेदितव्या । ननु चासादृश्याशङ्कायां सादृश्यप्रतिपादनमतिदेशः कात्र तुल्या शङ्केति तदुच्यते श्रुतौ योगोपदेशात् । तत्संवादित्वात् पातञ्जलादीनां योगशास्त्राणां तदुपनिबद्धानां प्रधानादीनामपि श्रौतत्वबुद्धिः कस्यचित् स्यात् सातिदेशेन व्यावर्त्यते । कः पुनर्वेदे योगोपदेशः श्वेताश्वतरोपनिषदि त्रिरुन्नतं विरुद्धत्वं स्थाप्यासमं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्यते ।

तथा पृथ्व्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न दुःखं प्राप्तस्य योगाग्निमयं शरीरम् ॥ इति ।

(१) शुतया – पा० २ पु० ।

भवतु श्रुतिसंवादात्। सम्यग्दर्शनोपायोपदेशांशस्य तथात्वं विप्रतिपन्नांशस्य तु मिथ्यात्वं पुरुषाणामन्यथार्थदर्शितत्वसम्भवात्॥ ३॥

न विलक्षणत्वादस्य तथात्वं च शब्दात्॥ ४॥

इत आरभ्यापादसमाप्तेस्तर्कावष्टम्भेन सांख्यादीनां य आक्षेपस्तत्समाधानं क्रियते। ननु च चोदनायाः स्वतः प्रामाण्यात् कथं तर्कनिमित्तो ह्याक्षेपः सम्भाव्येत। अत्रोच्यते। सिद्धवस्तुविषयत्वाद्वेदान्तानां तत्र च तर्कस्यापि प्रवेशादर्शनात्। यथात्मा नित्योऽनित्यो वेति विचार्य नित्य एवेत्यवधार्यते। श्रुतिश्च तर्कानुप्रवेशं दर्शयति। श्रोतव्यो मन्तव्य इति। न चेतनं ब्रह्म जगत्कारणमुपपद्यते। विलक्षणत्वादस्य कार्यस्य प्रकृतिधर्मानुविधायित्वे हि प्रकृतिविकारभावो दृष्टः सुवर्णकुण्डलयोरिव। न चेह कारणधर्मस्य चैतन्यस्याकाशादिष्वनुवृत्तिर्दृश्यते। नन्वयमसिद्धो हेतुर्ब्रह्मकार्यत्वादेव तद्धर्मानुवृत्तिं पाषाणादिष्वनुमिमीमहे। ननु च यदि शरीरेन्द्रियविषयाणां चैतन्यमभ्युपगम्यते तेषामपि देवदत्तादिवत् स्वतन्त्रत्वात् भोक्तृभोग्यत्वेनाङ्गभावं न प्रतिपद्येरन् न च लोके चेतनत्वं तेषां प्रसिद्धम्। अत्रोच्यते। केचिदभिव्यक्तचैतन्याः केचिदनभिव्यक्तचैतन्याः तत्र गुणप्रधानभावो न विरुध्यते। अत एव चाप्रसिद्धिरुपपद्यतेऽत्र क्रमो न लोष्टादीनां चैतन्यास्तित्वे प्रत्यक्षमनुमानं वा प्रमाणमस्ति हिताहितप्रवृत्तिनिवृत्त्यदर्शनादिदमेवाचैतन्यं यदस्मदादिवैलक्षण्यं (तस्मादविभावितचैतन्या लोष्टादय इति प्रतिज्ञामात्रमतः सिद्धो हेतुर्विलक्षणत्वादिति।)(१) किं च तथात्वमचेतनत्वं च शब्दादवगम्यते। विज्ञानं चाविज्ञानं चेति। ननु च मृदब्रवीदापोऽब्रुवंस्तत्तेज ऐक्षतेति च मृदादीनामप्रसिद्धचैतन्यानामपि चैतन्यं श्राव्यते॥ ४॥

नैतदेवम्।

अभिमानिव्यपदेशस्तु विशेषानुगताभ्याम्(२)॥ ५॥

(१) ( ) एतन्मध्यस्थो नास्ति २ पु०।

(२) विशेषानुगतिभ्यामिति शाङ्करभाष्ये पाठः।

अभिमानिन्यो देवतास्तत्र व्यपदिश्यन्ते । कथं गम्यते कौषीतकिनां(१) देवताशब्देन विशेषणाद् देवा ह वै देवता अहं श्रेयसे विवदमाना इति । ता वा एता देवताः प्राणो निःश्रेयो विदित्वेति तथानुगते चैतरेयके श्रूयते ऽग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यः चक्षुर्भूत्वा अक्षिणी प्राविशदितीन्द्रियेष्वनुगतां देवतां दर्शयति । यं पृथिवी नावेदयमापो न विदुरिति चान्तर्यामिब्राह्मणे पृथिव्यादीनामभिमानिनीं देवतां दर्शयति । कथमन्तर्यामिनं न जानातीति विशेषप्रतिषेधात् । तस्माद्विलक्षणत्वात् ब्रह्म जगत्कारणमिति प्राप्ते ऽभिधीयते ॥ ५ ॥

## दृश्यते तु ॥ ६ ॥

तुशब्दः पक्षं व्यावर्तयति सति सादृश्ये प्रकृतिविकारभावो ऽसति पुनः सादृश्ये तदभाव इति नैवं व्याप्तिः सिद्धा येन वैलक्षण्यत्वे हेतुरुच्यते । सत्यपि वैलक्षण्ये दृश्यते कारणभावः यथा भुक्तोदत्वात् केशलोमनखादिविलक्षणं कार्यं जायते गोमयाद्वृश्चिको जायते शालूकाद् दूर्वाङ्कुरः शृङ्गाच्छर इति सर्वत्र साधर्म्यं वैधर्म्यं च कार्यकारणविषयं केनचिदंशेनास्ति । यदि च सर्वसादृश्यं स्यात् प्रकृतेर्विकारभाव एव न स्यादस्ति चात्रापि केनचिदंशेन सादृश्यम् आकाशादौ कार्ये सत्तामूर्तत्वादिधर्मानुवृत्तेस्तस्माद्विलक्षणत्वादित्यसिद्धो हेतुः । यदुक्तं मन्तव्य इति तर्कस्यानुप्रवेशं श्रुतिः श्रावयतीति नवीनया श्रुत्या शुष्कतर्को ऽभ्यनुज्ञायते । किं तर्ह्यागमानुसारी यस्तर्कस्तदुपपत्त्यर्थं स एवानुज्ञायत इति ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

शब्दस्पर्शादिहीनाद्ब्रह्मणः शब्दस्पर्शादिमत्कार्यं जायते इत्यसत्कार्यवादः प्रसज्यते इति चेन्नैतदेवं(२) प्रतिषेधमात्रत्वात् सत्कार्यवादस्य प्रतिषेधमात्रमेतन्न सत्कार्यवादस्त्वया प्रतिषिध्यते । यथा सत्कार्यं भवति तथा तदन्यत्वमित्यत्र वक्ष्मामः ॥ ७ ॥

---

(१) कौषीतकानां – पा० २ पु० । (२) नैवम् – पा० २ पु० ।

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

यदि चेतनादचेतनं स्थूलमशुद्धं च कार्यं जायत इत्यभ्युपगम्यते । तस्यापीतौ प्रलयवेलायां तद्वत्प्रसङ्गाद्यथा कार्यं स्थूलमशुद्धं च तथा कारणस्यापि प्रसज्येत इत्यसमञ्जसमौपनिषदं दर्शनमितश्चासमञ्जसं ब्रह्मण्यविभागप्राप्तानां जीवानां पुनरुत्थाने मुक्तानामपि प्रसङ्गात् । अथ कारणेऽपि कार्यं पृथगेवावतिष्ठते तथा सत्यपीतिरेव न स्यादित्यसमञ्जसम् ॥ ८ ॥

## न तु दृष्टान्तभावात् ॥ ९ ॥

न तु तद्वत्प्रसङ्गः कुतो दृष्टान्तभावात् । यथा शरावादयोपीतिगच्छतः स्वधर्मं(१) हित्वाभावमापद्यन्ते यथा च पृथिवीविकाराः पृथिवीमपि गच्छन्तो वृक्षादयो न ते स्वधर्मेण तद्दूषयन्ति तथायं प्रपञ्चः प्रविलीयमानः शक्यात्मना कारणमग्रेऽनुप्रविशति । तथा च

ब्रह्माप्येति प्रपञ्चोयं रूपं हित्वा तु वैकृतम् ।
जहाति कठिनावस्थां जलस्थं(२) लवणं यथा ॥ इति ।

मुक्तानामुत्थानहेत्वभावान्नोत्तिष्ठेयुः ( इतरेऽविद्याकर्मानुबन्धादुत्तिष्ठेयुरिति )(३) इत्यविरोधः ॥ ९ ॥

## स्वपक्षदोषाच्च ॥ १० ॥

सांख्यस्य त्रिगुणमचेतनमरूपं निरवयवं च प्रधानं कार्याकारेण परिणमत इति स्वपक्षेऽत्राप्यस्य(४) दोषस्याविशेषान्नैकः पर्यनुयोक्तव्यः ॥ १० ॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः(५) ॥ ११ ॥

---

(१) स्वभावं – पा० २ पु० । (२) जलधौ – पा० २ पु० ।

(३) ()एतन्मध्यस्थो नास्ति २ पु० ।

(४) स्वपक्षस्तथाप्यस्य – पा० २ पु० ।

(५) अत्र श्रीभाष्ये तर्काप्रतिष्ठानादित्येकं सूत्रमन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्ग इत्यपरमिति सूत्रद्वयं दृश्यते । अविमोक्षप्रसङ्गः – पा० शाङ्करभाष्यानुसृतः ।

चार्थोऽपिशब्दः तर्कस्यानवस्थानाच्च न वेदान्तदर्शनस्यासामञ्जस्यम् कः पुनरयं तर्को नाम प्रमाणानामनुग्राहक ऊहो ऽनधिगतत्त्वे वस्तुनि क्रियमाणस्तत्त्वपरिज्ञानप्रयोजनो यथात्मनि नित्यत्वमनित्यत्वं वा इत्यज्ञायमाने तत्त्वे प्रमाणसम्भवान्नित्यत्वमनुजानाति तदसम्भवाच्चानित्यत्वमुपेक्ष्यते सोऽयं निरूपणात् प्रत्ययस्तर्क इत्युच्यते। तथा च न्यायसूत्रम् अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इतीदृशस्य तीर्थकरबुद्धिवैरूप्यादनवस्थानादेकेन कपिलेन कणभुजा वा तर्कावष्टम्भभेदव्यवस्थापितोऽर्थः सोन्येन प्रतिषिध्यते। अथापरेण समर्थ्यत इति परस्परविरोधान्न सम्यग्ज्ञानसिद्धिः। अथोच्यते यथानवस्था न भवति तथानुमेयं जगत्कारणमनुमानादिभिश्च हेतुभिः प्रधानं प्रतिष्ठाप्यते न तत्रानवस्थेति चेदेवमप्यनवस्थादोषादनिर्मोक्षस्तर्काणां कथमत्यन्तातीन्द्रिये विषये साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानासम्भवान्नानुमानेनाभिप्रेतार्थसिद्धिः कस्यचिदतः श्रुतिमूलमेव जगद्बीजावधारणमिति स्थितम् ॥ ११ ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

एतेन प्रधानमतनिराकरणन्यायेनानेनातिनिर्दिश्यते । वैशेषिकाद्युक्तं दूषणं परिहर्तुमशक्यमिति माभ्रान्तिः कस्यचिदभूदित्येतेन प्रधानवाद्युक्ताक्षेपनिराकरणेन शिष्टैर्मनुव्यासप्रभृतिभिरपरिगृहीताः परमाणवादिकारणवादा व्याख्याता निरस्ता वेदितव्याः। परिगृह्यन्त इति परिग्रहाः शिष्टैर्न केनचिदप्यंशेन परिगृहीता इत्यर्थः ॥१२॥

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

अन्यथा पुनराक्षिप्यते। ब्रह्मणोऽनन्यत्वाद्भोक्तृभोग्ययोरविभागः। कथं भोक्तुर्जीवस्य भोग्यापत्तेर्भोग्यस्य च शरीरेन्द्रियविषयलक्षस्य भोक्त्रापत्तेरापत्तिरेकीभावः ततश्चासमञ्जसं दर्शनं लोकप्रसिद्धविभागपरिलोपादिति चेदत्रोच्यते। स्याल्लोकवत् भवेदस्मत्पक्षेऽप्यनयोर्विभागः परमात्मना वा विभागो लोके समुद्रेणानन्यत्वे ऽपि फेनतरङ्गादीनां परस्परविभागो नाभेदापत्तिरेवमत्रापि स्यात्। भेदाभेदयोर्हि सर्वप्रमाणसिद्धत्वादुपपत्तिः ॥ १३ ॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

ब्रह्मणोऽनन्यत्वं भोग्यभोक्तृवर्गयोः सिद्धवत् कृत्वा विभागो वर्णितः अथेदानीमनन्यत्वमसिद्धमिति साध्यते। अत्र वैशेषिकाः प्राहुः। कार्यकारणयोरत्यन्तं भेदः कारणं मृत्पिण्डः शरावादिकार्यं भेदेनोपलभ्यते कार्यस्य चोदकाहरणादिकार्यं न मृत्पिण्डस्यातोऽनयोर्भेदोऽसच्च कार्यमुत्पद्यत इति वैशेषिका मन्यन्ते। तन्निराकरणायाह तयोरनन्यत्वमारम्भणशब्दादिभ्यः एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्सिसाधयिषया दृष्टान्त उपादीयते। यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति वार्थो वागिन्द्रियस्योभयमारम्भणं विकारो नामधेयं च विकारोभिधेयोपपत्तिस्तदभिधेयं नामधेयं उभयमालम्ब्य वाग्व्यवहारः प्रवर्तते घटेन उदकमाहरेति मृण्मयमित्यस्येदं व्याख्यानम्। यदि तर्हि व्यवहारहेतुः कार्यं न तर्हि कार्यकारणयोरनन्यत्वमित्याशङ्क्याह। मृत्तिकेत्येव सत्यमिति। कारणमेव कार्यात्मना घटवदवतिष्ठते मृत्समन्वितं हि कार्यमुपलभ्यते त्रिष्वपि कालेषु कारणाधीनं कार्यं नाश्वमहिषवद्देशतः कालतो वा व्यतिरिक्तमुपलभ्यते कारणस्यावस्थामात्रं कार्यं व्यतिरिक्ताव्यतिरिक्तं शुक्तिरजतवदागमापायधर्मित्वाच्चानृतमनित्यमिति च व्यपदिश्यते तदर्थमेव मृत्तिकेत्येव सत्यमित्युक्तम्। प्रत्यक्षसिद्धमेव हि सत्यत्वमनूद्यते न विधीयते दृष्टान्तत्वेनोपादानात्। प्रमाणान्तरसिद्धो हि दृष्टान्तो भवति। तथा च न्यायसूत्रं लौकिकपरीक्षकाणां यत्र बुद्धिसाम्यं(१) स दृष्टान्त इत्यप्ययागादग्नेरग्नित्वमिति च कारणात्मना निरीक्षमाणं कार्यं चातिरिक्तं नोपलभ्यते कारणात्मन्येव तिरोहितं भवतीत्यभिप्रायेण उक्तमादिशब्देनैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीत्येवंजातीयकं वचनं गृह्यते। तथा च श्रुत्यन्तरमात्मव्यतिरिक्तस्य प्रपञ्चस्य सत्यतां दर्शयति। अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमिति। यदि चानृतत्वमभिप्रेयात् प्राणा असत्यमिति ब्रूयात्।

अत्र केचिन्मायावादमवतारयन्ति। मृत्तिकेत्येव सत्यमित्यवधारणात् कारणमेव सत्यं कार्यमनृतमसत्यमनादिकालप्रवृत्ताविद्यावशादयं भेदः प्रतिभासते न परमार्थतोऽस्ति। यद्येवं प्रत्यक्षात् प्र-

---

(१) परीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यमिति न्यायभाष्यवार्त्तिकानुसृतः पाठः।

त्यक्षादिप्रमाणव्यवहारः कथं वा विधिप्रतिषेधशास्त्राणामर्थवत्ता कथं वा मोक्षशास्त्रेणासत्येन ब्रह्मज्ञानमुत्पद्यत इति । नायं दोषो मिथ्यारूपो व्यवहारो बाधकप्रत्ययाभावात् अव्याहतः प्रवर्तते प्रमाणानि च प्रत्यक्षादीन्यविद्यावद्विषयाणि न विरुद्ध्यन्ते बाधकप्रत्ययमासाद्य निवर्तन्ते । अत एवाविद्यावत्पुरुषविषयौ विधिप्रतिषेधावुपपन्नावसत्यार्थेक्षणात् सत्यप्रतिपत्तिर्भविष्यति । यथा स्वप्ने शुभाशुभसूचनं लिप्यक्षरेभ्यश्च पारमार्थिकवर्णप्रतीतिरिति । न च निरवयवस्यात्मनः परिणामो वकल्प्यते तस्मान्मायामात्रमिदं प्रपञ्चजातमित्यत्र ब्रूमो मृत्तिकेत्येव सत्यमित्यस्यार्थो व्याख्यातः । यदि च प्रपञ्चासत्यत्वं मृत्तिकाया अप्यसत्यत्वं प्रपञ्चत्वात् कथं वा मिथ्यात्वमवगतम् । न तावत् प्रत्यक्षानुमानाभ्यां हीदं प्रपञ्चजातं परिच्छिन्नं न चाकारणदोषबाधकप्रत्ययौ स्तः पृथिव्यादिज्ञानस्यासंसारं सर्वेषां प्राणिनामनुवृत्तेरतः पारमार्थिक एवायं भेदस्तन्निबन्धनश्च व्यवहारः । तथैव यदि च मिथ्यात्वं सिद्धं स्यात् ततो दिङ्मोहादिवद्बाधकप्रत्ययाभावादनुवर्तते बाधकप्रत्ययं चासाद्य निवर्तत इति कल्पना युज्येत । ननु प्रमितिवादिवदविद्याऽत्रापि कारणदोषः स्यात् तद्वतां प्रमातॄणां भेदविज्ञानमुत्पद्यमानं मिथ्या स्यात् द्विचन्द्रज्ञानवत् । अत्रोच्यते । स हेतुः परदूषणाय वक्तव्यो यः स्वसिद्धान्तं न बाधते अयं तु तवैव दोषमावहति यथाविद्यावत्प्रमातॄणामुत्पन्नं भेददर्शनं मिथ्या तथाऽद्वैतब्रह्मज्ञानमपि मिथ्यैव यो हि श्रोता मन्ता वा प्रागवस्थायामविद्यावानेव हि सः अविद्यावत्त्वं चेन्मिथ्यात्वे कारणमसत्यपि बाधकज्ञाने मिथ्यात्वमनुमानात् प्रसक्तं ब्रह्मज्ञानस्य केन वार्यते किं प्रपञ्चज्ञानस्य बाधकप्रत्ययोस्त्यविद्यावत्त्वमेव न तत्रापि कारणं भवता व्यपदिष्टं तत् समानं सर्वत्र मिथ्यात्वे ततश्च मूलोच्छेदः प्रसज्यते । अनुमानान्तरं च ब्रह्मज्ञानं मिथ्या ज्ञानत्वात् प्रपञ्चज्ञानवत् यथा निद्रालक्षणस्य कारणदोषस्याविशेषात् स्वप्नज्ञानस्य सर्वस्य मिथ्यात्वमापद्यते यथा चारण्ये तैमिरिकगतस्य वसतो द्विचन्द्रज्ञानमविशिष्टम् । न च तेषां बाधकप्रत्ययोस्तीति न चासत्यात् सत्यप्रतिपत्तौ दृष्टान्तोऽस्ति न च शशविषाणात् कस्यचित् प्रतिपत्तिरस्ति । यदुक्तं स्वप्नवदिति तदयुक्तम् । तत्रापि वस्त्वेव सूचकं स्याद्विषयं यद्विज्ञानं तद्वस्तुरूपं शुभस्य सूचकं दृश्यं चन्द्रादि स्मर्यमाणं न च पुनर्न दृश्यं न ज्ञानमिति सूचकं नास्ति ज्ञानस्यापि प्रपञ्चान्तः-

पातित्वात् । न च तदात्मरूपमेव उत्पन्नप्रध्वंसित्वात् लिप्यक्षरमपि वस्त्वेव सङ्केतवशाद्गमकं समस्तद्रव्यं हि विन्यासविशेषावस्थं चक्षुर्ग्राह्यं श्रोत्रग्राह्यस्य वर्णस्य गमकं गम्याभेदे ऽपि लिप्यक्षराणां देशान्तरे भेदो दृश्यते । यदि वा वस्तुत्वाद्गमकत्वं चकारे दृष्टे वकारप्रतिपत्तिः स्यात् प्रतिपत्तिं च करोत्यवस्तु चेति विरुद्धम् इदमेव हि वस्तुत्वं यत् सत्प्रतिपत्तिकारणत्वं नाम न हि शशविषाणस्य कचित् कारणत्वं दृष्टम् । यदप्युच्यते शङ्कादिरयं मरणहेतुरिति तदसद्विषयमेव शङ्कयास्मर्यमाणं मृतिहेतुश्च भ्रातृपुत्त्रादिशोकेन कस्यचिन्मरणं यथा । यथा च दशमावस्थां गतः कामो मृतिहेतुस्तस्मात् असत्यात् सत्यप्रतिपत्तौ दृष्टान्तो नास्तीत्यवस्थितम् । आगमात् प्रपञ्चस्य मिथ्यात्वमुच्यते तदयुक्तं श्रोत्रप्रभवस्य ज्ञानस्य मिथ्यात्वाद्वर्णात्मकस्य तत्त्वमस्यादिवाक्यस्याभावस्ततश्च केन मिथ्यात्वं प्रतिपद्येत नेह नानास्तीत्यपीहशब्दोपादानात् । कारणस्वरूपे नानात्वं नास्तीति विवक्षितं स्थितं स्थित्यवस्थायां तु कार्यमप्यस्तीत्यविरोधः । स एष नेति नेत्यात्मेति शरीराद्यनात्मपर्युदासेनात्मस्वरूपमुपदिश्यते प्रपञ्चाभावो यत्र स द्वैतमिवेतीवशब्दोऽनर्थको यथा विततमिवेति । अवधारणार्थो वा यथाश्व इव इति सादृश्यार्थो वा यथात्रैवाग्नेरिति धूमविस्फुलिङ्गादिवद्विविधं विकारजातं यस्यामवस्थायां भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तदा केन बलेन कं विषयं पश्येदिति विषयज्ञानं निषिध्यते कारणप्राप्तावित्येव सर्वमविरुद्धम् । का चेयमविद्या सत्त्वासत्त्वाभ्यामनिर्वचनीयेति चेत् अनिष्टोत्तरमेतत् ।

यस्याः कार्यमिदं कृत्स्नं व्यवहाराय कल्पते ।
निर्वक्तुं सा न शक्येति वचनं वचनार्थकम् ॥

यदि वानिर्वचनीया कथमाचार्यः शिष्येभ्यः प्रतिपादयेत् अप्रतिपन्नया च तया कथं व्यवहारः क्रियते । किञ्चादिमती साऽनादिरिति वक्तव्यम् अनादित्वे नित्यत्वादुच्छेत्तुमशक्येत्यनिर्मोक्षप्रसङ्गः । ब्रह्म चेन्निमित्तं तदयुक्तमित्युक्तं पुरस्तात् । अथात्मस्वरूपं निमित्तमप्येतन्निमित्तनित्यत्वान्नैमित्तिकानुपरमादनिर्मोक्ष एव । अथ सत्यसती च अविद्या तदा सद्भावाभावरूपत्वानुपपत्तेः न हि युगपदेकत्र विरुद्धज्ञानसम्भवः । अथाव्याकृताकाशमाद्याविद्येत्युच्यते उच्यतां न संज्ञायां विरोधो वस्तुत्वं तु प्राप्नोत्युत्पत्तिमत्वादङ्कुरा-

दिवत्। न चाग्रहणमविद्या ग्रहणाभावस्यायस्तुत्वे बन्धहेतुत्वाभावात्। तथा ह्यवस्तु चेदग्रहणं न बध्नाति खपुष्पवत् बन्धकं चेदवस्तुत्वं विरुद्धं मत्स्यबन्धवदत एव निर्वचनीयत्वमविद्यायाः। विद्याया अन्या त्वविद्या विपरीतज्ञानं देहादिषु तद्धेतुकं च ब्रह्मस्वरूपाग्रहणम्। योपि मन्यते नामरूपमविद्याशब्दवाच्यमिति तदाप्यनिर्वचनीयत्वं नास्ति निरुच्य वचनं निर्वचनमुच्यते गवादिशब्दाश्च स्पष्टा एव निरुच्यन्ते व्याकरणे तद्वाच्याश्वगवादयो निरुक्ताः तस्मात् भेददर्शनतोऽविद्या न मिथ्या परमात्मनोऽवस्थाविशेषः प्रपञ्चोयमत एव वस्तुत्वं सत्त्वादात्मकत्वादाकाशादिषु सत्ता अपूर्णत्वादिधर्मानुवृत्तेरिति प्रोक्तम्। कथं पुनः परिणामो निरवयवस्याकाशकल्पस्येति चेत्। अत्रोच्यते परिणामस्वाभाव्यात् क्षीरवत् सर्वज्ञत्वाच्च सर्वशक्तित्वाच्च स्वेच्छया परिणामयेदात्मानमिति शक्यते वक्तुम्। ननु सावयवत्वात् क्षीरस्य परिणामोपपत्तिः उच्यते न सावयवत्वं तत्र परिणतिहेतुर्यदि स्यात् अम्बुनोपि दधिभावेन परिणामः स्यादतोऽप्रयोजकं सावयवत्वम्। परिणामस्वाभाव्यादेव हि पयः परिणमते तदापीदं चिन्त्यम्। किमवयविनः परिणामे शक्तिराहोस्विदवयवानामिति न हि तस्मिन् द्रवद्रव्ये ऽवयवी नाम व्यतिरिक्तो ऽभ्युपगम्यते मायावादिना। ततः पारिशेष्यादवयवानां शक्तिस्ते च निरवयवा न ह्यवयवानामवयवाः सन्ति येन सावयवस्य परिणामो वर्ण्येत। ये चावयवानामवयवाः कल्पितास्ते किं परिणमन्ते नेति। यदि न परिणमेतरन् दधनि पयो दृश्येत तस्मात् सर्वेषामवयवानां परिणामित्वमेष्टव्यम्। किं चावयवानामवयवकल्पने तेषामप्यवयवकल्पने ह्यनवस्था क्षीरसमुद्रश्च कुण्डे स्यादवयवानामानन्त्यात् तस्मान्निरवयवस्यैव परिणामो दृश्यत इति ब्रह्मणोप्युपपद्यते तथा च न्यग्रोधानां दृष्टान्तेन परिणामो वर्णितः श्रुत्याचष्टे।

अप्रच्युतस्वरूपस्य शक्तिविक्षेपलक्षणः।
परिणामो यथा तन्तुनाभस्य पटतन्तुवत्॥

पटवच्च यथाप्रच्युतस्वरूपाणां तन्तूनां पटात्मनावस्थानं यथाकाशादप्रच्युतस्वभावाद्वायुरुत्पद्यते इति सोऽयं शक्तिविक्षेपोपसंहारवादः सूरिभिराश्रितः। प्रमाणवत्त्वादत्राह न प्रमाणवत्त्वमस्य क्षीरस्येव ब्रह्मणः कृत्स्नपरिणामप्रसङ्गादनित्यता स्यात् नित्यं वि-

भुमिति च श्रुतिर्विरुध्येत । विकारापन्नमेव ब्रह्मेति सर्वलोको मुच्येत प्रत्यक्षसिद्धत्वादुपदेशानर्थक्यमतोनुपपत्तेरस्य पक्षस्य मायावादो ऽस्माभिर्निपुणमतिभिराश्रितः । श्रुतिश्च मायां तु प्रकृतिं विद्यादिति । स्मृतिरपि मम माया दुरत्यया इति । अत्राभिधीयते । न हि सर्वात्मना दृष्टान्तसाधर्म्यं किञ्चिदुपपद्यते यथा तावदचेतनानामेव परस्परं परिणामवैचित्र्यं क्षीरस्यैकः परिणामो दध्यवस्थाऽन्नस्यानेकः केशनखदन्तपिशितादिलक्षणो यथोर्णनाभस्योर्णा परिणामः प्राण्यन्तरेष्वत्यन्तमसम्भाव्यमानो दृश्यते । न हि भावानां शक्तयः केनचित् प्राकृतबुद्धिना परिच्छेत्तुं शक्यन्ते तर्काणामप्रविष्टत्वात् साधर्म्यवैधर्म्यस्य सर्वत्र योजयितुमशक्यत्वात् । किमुत चेतनस्य सर्वज्ञस्य सर्वशक्तेः स्वतन्त्रस्य शास्त्रैकसमधिगम्यस्य जगत्कारणस्य परिणामो व्यवस्थाप्येत । स हि स्वेच्छया स्वात्मानं लोकहितार्थं परिणामयन् स्वशक्त्यनुसारेण परिणामयति । तथा च श्रुतिः । आत्मन आकाशः सम्भूतस्तत्तेजो ऽसृजतेति वाऽचेतनं महाभूतं सृजति स्वयं चेतनरूपेण पृथगेवावस्थितः तथा च दर्शितं हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति । यथा देवानां त्रयश्च त्रीणि च सहस्रेत्युक्त्वा महिमान एवैषामेत इति सङ्कल्पमात्रेणानेकधा भावं दर्शयित्वोपसंहरति त्रयस्त्रिंशत्वे च देवा इति तेषामपि यः स्रष्टेश्वरस्तस्य सामर्थ्यं को वेदितुमर्हति । दर्शयतश्च मन्त्रौ को अद्धा वेद को इह प्रावोचत् कुत आयाता कुत इयं विसृष्टिः अर्वाग्वेदा अस्य विसर्जनेनाद्धा को वेदयत आबभूव यदि वा दधे यदि वा न योस्याध्यक्षः परमे व्योमन् सोङ्ग वेद यदि वा न वेदेति(?) स एव परमेश्वरः सृष्ट्यवस्थायां प्रविभक्तनामरूपं विविधभोक्तृभोग्यं प्रपञ्चं वेद प्रलयावस्थायां स्वात्मनि प्रलीनं प्रविभक्तं न वेदेत्यर्थः । श्वेताश्वतरा अपीश्वरमचिन्त्यशक्तिमामनन्ति ।

तमीश्वराणां परमं महेश्वरम्
तं देवानां परमं च दैवतम् ।
पतिं पतीनां परमं पुरस्तात्
विदाम देवं भुवनेशमाद्यम् ॥
न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।

परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥
न तस्य कश्चित् पतिरस्ति लोके
न वेदिता नैव च तस्य लिङ्गम् ।
स कारणं कारणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥ इति ।

विविधा शक्तिः सा च स्वाभाविकी न चागन्तुकीति ब्रुवन्त्या कुतार्किकचोद्यं किं नाम न परिहृतम् । न च निरवयवस्य परिणामो नास्ति यथा मनसः कामक्रोधलोभमोहादयः परस्परविलक्षणाः समुद्रोर्मय इवोद्भवन्ति मनःस्वरूपं चाऽप्रच्युतम् । दर्शितं चैतत् सर्वं मन एवेति यथा नभसो वायुर्वायोरग्निरसिद्धो दृष्टान्त इति चेद्बधिरस्त्वं किं श्रावयन्तीं श्रुतिं न शृणोषि । शृणोमि अप्रमाणं सानुपपन्नार्थवादित्वादिति चेदूर्णनाभि प्रजापतिप्रियं यस्य दृष्टत्वादत्रोपपन्नमिति चेदत्राप्यविशिष्टं शास्त्रदृष्टत्वं न च प्रामाण्ये कश्चिद्विशेषः स्वेस्वे विषये। अथ मन्यसे नेदं शास्त्रं सृष्टिप्रतिपादनपरं किं तर्हि अद्वैतप्रतिपादनपरं सृष्टौ प्रयोजनाभावाद् भेदस्य च प्रमाणान्तरासिद्धत्वादिति । अत्रोच्यते कार्यकारणयोरनन्यत्वादित्यनेन हेतुनात्मैकत्वं प्रतिपाद्यते भवता स चायमसिद्धो हेतुः सर्गानभ्युपगमे वियदादि सर्वं नित्यं मीमांसकानामिव प्रसज्यते । न च सृष्टिर्निष्प्रयोजना विज्ञानात्मनां भोगज्ञानार्थत्वात् सत्सु हि शरीरेन्द्रियेषु भोगो ज्ञानं चावकल्पते अग्निहोत्रादिलक्षणस्य क्रियाकारकफलात्मकस्य व्यवहारस्य भेदमन्तरेणानुपपत्तेः । स्वभावसिद्धं भेदमङ्गीकृत्य कर्मकाण्डव्यवहारोपपत्तेर्न भेदः शास्त्रीय इति चेदभेदो ऽपि तथा सामान्यात्मना सर्वं वस्तुजातमभिन्नमनुवृत्तिप्रत्ययगोचरत्वात् । तत् द्विविधं सामान्यं परमपरं च सत्तालक्षं गोत्वादिलक्षणं च ततश्चाभेदोऽप्यशास्त्रीयः प्रसज्यते । अथ मनुषे ब्रह्मात्मना सर्वस्यानन्यत्वमन्यतोऽसिद्धमिदं सर्वं यदयमात्मा इत्यभेदः प्रतिपाद्यते शोभनमभ्यधायिन्यायेनानेन(?) धर्मोऽप्यग्निहोत्रादिलक्षणोत्यन्तातीन्द्रियः शास्त्रेणैवावगम्यते इति न विशेषं पश्यामः । कर्मविधीनां मायामात्रविषयत्वमद्वैतवाक्यानां च परमार्थवस्तुविषयत्वमिति विरुद्धम् । भेदाङ्गीकरणं युक्तं प्रामाण्यतुल्यत्वात् प्रत्यक्षादिभिश्च भेदः प्रतिपाद्यते न च सत्तामात्रं प्रत्यक्षस्य विषयश्चक्षुरादीनां

नियतरूपादिविषयत्वात्। न च सत्ता सञ्यो निष्कृष्य केनचिदिन्द्रियेण विषयीक्रियते तस्मात् सत्तैवासिद्धान्तविषय इति प्रतिप्रलपतामौषधमन्वेष्टव्यमतो यदुच्यते केचिदाहुर्विधातृप्रत्यक्षं न निषेद्धृविपश्चित इति तदनुज्ञायते किं रूपादिविधातृत्वान्न प्रत्यक्षमन्निषेधकं स्वविषयतामात्रपर्यवसानादन्यानिवृत्तिरभावप्रमाणगम्यया। तथाहि

स्वरूपमेव वस्तूनां परस्परविलक्षणम्।
नानात्वं तत्सु संवेद्यं भेद इत्यभिधीयते॥
घटरूपं पटे नास्ति पटरूपं घटे न हि।
इति देशान्तराभाव अन्योन्याभाव उच्यते॥

किं च सत्तामात्रग्राहकं सर्वमिद्रियमिति सङ्करः स्यात्। अन्धोऽपि रूपं पश्येद्बधिरोऽपि शब्दं शृणुयात्। अथ शब्दादिविषयभेदग्रहणाद्यवस्थेति न तर्हि सत्ताविषयत्वं यथानुवृत्तिप्रत्ययात् सत्तेष्यते तथा गोत्वाद्यवान्तरसामान्यमपि प्रसज्यते तदाश्रयभूतं चेद्द्रव्यं भेदप्रत्ययसामर्थ्यात् अतः सामान्यविशेषात्मकं वस्तु सिद्धम्। इदं च वक्तव्यं सत्ताज्ञानं ततो व्यतिरिक्तमव्यतिरिक्तं वेति। यदि व्यतिरिक्तं द्वैतप्रसङ्गोऽनवस्था च ज्ञानसत्ताऽन्येन ज्ञानेन तत्सत्ताप्यन्येनेति। अथाव्यतिरिक्तं ग्राहकाभावात् ग्राह्या सत्ता न सिद्ध्यति विधातृप्रत्यक्षमिति च प्रतिज्ञाहानिस्ततश्च सन्मात्रवादिनो न मनो नेन्द्रियं न ज्ञानं न ज्ञेयमिति सर्वशून्यता प्राप्ता स कथं परं प्रत्यापद्येत स्वयं वा कथं बुद्ध्यत इति। सन्मात्रप्रतिमाद्यैव प्रतिभाति नः अपरविद्यानां चोमित्येतदक्षरमुद्गीथमुपासीतेत्यारब्धानां कर्माधिकृतपुरुषाणां प्राणप्रतीकाद्युपासनानां च भेदमन्तरेणात्मलाभानुपपत्तेः। कथमिदं मायामात्रं प्रमाणमन्तरेण प्रतिज्ञातुं शक्यं त्रिवृतं त्रिवृतमेकैकं करवाणीति बहुद्धिपूर्वं परदेवताप्रवृत्तेस्तदभिप्रायमज्ञात्वा कोनामादृष्टनिर्भयः सर्वं मिथ्येति कल्पयितुमर्हेत् यदि च दृष्टसाधर्म्येणादृष्टं निर्णेतुमिष्येत तदा च दृष्टमदृष्टं द्रष्टव्यम्। कुतश्चायमवगमो भवतः न हि सूत्रकारः कचिन्मायाशब्दं प्रायुङ्क्त यत्र स्वप्नज्ञानान्मायामात्रं तु कात्स्न्येन अनभिव्यक्तस्वरूपत्वादिति हि यत्रोक्तं वैधर्म्याच्च न स्वप्नादिवदिति वैधर्म्यमुक्तमीक्षतेर्नाशब्दमिति चारभ्य प्रत्यधिकरणं स्मृतिमन्तरेण नोपपद्यते सूत्रकारस्य स्मृत्यनवकाशदोष इत्यारभ्य सांख्याद्युद्भाषितदू-

षणोद्धरणार्थं प्रत्यधिकरणं प्रयासोनर्थकः स्यात् । मायामात्रत्वे न वियदश्रुतेरिति चारभ्य भूतानामुत्पत्त्यादिविचारोऽनर्थकः स्यात् । ननु सूत्रकारो न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हीति ब्रह्म व्यतिरिक्तं सर्वं मायेति वक्ष्यति । मैवं वोचस्तस्याधिकरणस्यान्यविषयत्वान्न प्रपञ्चाकारं ब्रह्मोपास्यं किं तर्हि निराकारमात्रमुपास्यमिति तात्पर्यम् । यदप्युक्तं मायां तु प्रकृतिं विद्यादिति तदयुक्तम् अजामेकामिति तेजोबन्नलक्षणा प्रकृतिः प्रकृता सा मायाशब्देनाभिधीयते प्रकरोति स्वविकारानिति प्रकृतिरुच्यते । गीतायामपि वस्तुभूता प्रकृतिर्भूतामपीति व्यपदेशात् । क्वचिन्मायाशब्दः प्रकृतिवचनो मीयते परिच्छिद्यते ऽनयेति प्रज्ञोच्यते यथेन्द्रो मायाभिरिति । अपि च मायाशब्दमात्रेण कृत्स्नो वेदः सुप्रमेयं स्वर्गापवर्गलक्षणं यथाभूतं प्रत्याययन्नप्रमाणमसत्यमिति वा कल्पयितुमिति ज्ञानेन(१) प्रवर्तते वेदार्थे यथा वह्नेर्धूमशक्त्या यथा प्रवर्तन्तामिति ॥ १४ ॥

## भावे चोपलब्धेः ॥ १५ ॥

इतश्चानन्यत्वं कारणभावे कार्यस्योपलब्धेस्तन्तुषु पटो मृत्पिण्डे घटो न देशान्तरे कालान्तरे चोपलभ्यते । यत्र पुनरन्यत्वं तत्र तद्देशान्तरे कालान्तरे चोपलभ्यते यथा गोरश्वोऽश्वो न गोर्भावमपेक्ष्यते । ननु चाग्निभावे धूमो जायते न चानन्यत्वं तत्रोच्यते निमित्तकारणमग्निः पुत्रस्येव पितरि विनष्टे ऽप्यग्नौ धूमस्थितिदर्शनात् इह तूपादानकारणापेक्षयानन्यत्वमुच्यते अस्ति धूमे ऽपि भूतत्रयं कारणं तेषामेषामेव धूमावस्थेत्यनन्यत्वम् ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

इतश्चानन्यं सदेव सौम्येदमग्र आसीदिति इदंशब्दवाच्यस्य कार्यस्य अवरकालीनस्य कारणे सत्त्वादनन्यत्वं कथं गम्यते सामानाधिकरण्यात् ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

असद्वा इदमग्र आसीदित्यसद्व्यपदेशात् कारणे कार्यस्य सत्त्वादित्यसिद्धो हेतुरिति चेत् अत्रोच्यते न धर्मान्तरेण व्यपदेशात्

(१) कल्पयितुमिति ज्ञातो न प्रवर्तते – पा० २ पु० ।

नायं विरोधो धर्मान्तरेण चाभिव्यक्तनामरूपादनभिव्यक्तनामरूपत्वं धर्मान्तरं तेनासदिति व्यपदिश्यते। लोके ऽपि यदतिसूक्ष्मं व्यवहारायोग्यं च असदिति व्यपदिश्यते कथमवगम्यते वाक्यशेषात् तत्सदासीदिति तच्छब्देन प्रकृतपरामर्शादत्यन्तासत्त्वे तदनुपपत्तेः ॥ १७ ॥

युक्तेः शब्दान्तराच्च ॥ १८ ॥

इतश्च कारणे कार्यस्य सत्त्वं युक्तेः का पुनर्युक्तिर्मृत्पिण्डात् घटो जायते न दधि शशविषाणं वा यद्यसन् घटो जायेत असत्त्वाविशेषाच्च ततस्तयोरप्युत्पत्तिः स्यात्। ननु च कारणशक्तिनियमात् व्यवस्था भविष्यति नेति ब्रूमः स एवास्माभिः पर्युनुयुज्यते कथं कारणशक्तिनियम इति असत्त्वाविशेषे मृत्पिण्डस्य या शक्तिः कथमेकत्र सा नियम्यत इति कार्यस्य कारणे सद्भावमुक्ता नियमहेतुरुच्यमानो यः कश्चित् स सर्वः पर्यनुयोगं नातिवर्तते तस्मात् सत्कार्यमुत्पद्यते इत्यभ्युपगन्तव्यम्। ननु तवापि कारणस्वरूपवत् कार्यस्य सिद्धत्वात् करकव्यापारोऽनर्थकः स्यात्। अथाभिव्यक्त्यर्थ इति चेदभिव्यक्तिः किं विद्यमाना उत अविद्यमाना इति यदि सती कुम्भकारादिव्यापारानर्थक्यं तदवस्थमितरत्रासत्कार्यवादप्रसङ्गः। अत्रोच्यते। सदेव कार्यं कुतः कारणमेव हि तां तामवस्थां प्रतिपद्यमानं कार्यमिति गीयते। अवस्थातद्वतोश्च नात्यन्तभेदो न हि शुक्लपटयोर्धर्मधर्मिणोरत्यन्तभेदः किन्त्वेकमेव वस्तु न हि निर्गुणं नाम द्रव्यमस्ति न हि निर्द्रव्यो गुणोस्ति तथोपलब्धेः उपलब्धिश्च भेदाभेदव्यवस्थायां प्रमाणं प्रमाणव्यवहारिणां तथा कार्यकारणयोर्भेदाभेदावनुभूयेते(१)। अभेदधर्मश्च भेदो यथा महोदधेरभेदः स एव तरङ्गाद्यात्मना वर्तमानो भेद इत्युच्ये न हि तरङ्गादयः पाषाणादिषु दृश्यन्ते तस्यैव ताः शक्तयः शक्तिशक्तिमतोश्चानन्यत्वमन्यत्वं चोपलक्ष्यते यथाग्नेर्दहनप्रकाशनादिशक्तयो भेदाः यथा च वायोः प्राणादिवृत्तिभेदन भेदः। तस्मात् सर्वमेकानेकात्मकं नात्यन्तमभिन्नं भिन्नं वा। तदेवं प्रत्यक्षमनुमानमागश्चास्मत्पक्षे प्रमाणत्रयं त्वत्पक्षे न किञ्चिदस्तीति विशेषः। कोसावागमः एषः सदेव सोम्येदमग्र आसीदिति इदंशब्दवाच्यस्य कार्यस्य प्रलयकाले कारणात्मनावस्थानं दर्शयति। यदा चाभिव्यक्तिहेतुश्चक्रादिस-

(१) उपलभ्येते – पा० २ पु०।

न्निधिस्तदाभिव्यक्तिर्यदा वासन्निधिस्तदा तिरोभूतिस्तद्धेतूनां चान्ये हेतवस्तेषामप्यन्य इत्यनादित्वात् संसारस्याविरोधो भोगस्य च धर्माधर्मनिमित्तत्वात् साधनानामभिव्यक्त्यनभिव्यक्ती तदपेक्षया भवत इत्यनवद्यम् । ततश्चाभिव्यक्तितिरोभावावस्थयोरन्योन्याभिभवादन्यतरावस्थानं मरकतप्रभवे चेतरेषां श्रौतश्च दृष्टान्तोऽनुसन्धातव्यो निरवयवो वटकणिकाऽणिम्नी तां तामवस्थां गत्वा स्थूलीभवन्नुपलभ्यते दर्शितं च महान्यग्रोधस्तिष्ठतीति । न हि दृष्टेऽनुपपन्नं नाम यथा च पुंस्त्वं विद्यमानमेव यौवनावस्थायामभिव्यज्यते अन्यथा षण्डस्यापि पुंस्त्वप्रसङ्गात् । कथं वा असदुत्पत्तिर्गीयते न ह्यसतो जननि कर्तृत्वं दृष्टं शशविषाणं जायत इत्यपि च । यतो मृद्दण्डचक्रादेर्घटोत्पत्तिर्वर्ण्यते तस्य नित्या शक्तिराहोस्विदनित्या यदि नित्या नित्योत्पत्तिप्रसङ्गोऽन्यानपेक्षत्वात् अथानित्या साप्यन्येन कर्तव्या साप्यन्येनेत्यनवस्था प्रसज्यते । नियतकारणोपादानं च न प्राप्नोति शक्तीनामनन्तत्वात्(१) । अथ मन्यसे कारणशक्तयो नित्या एव तास्तु सहकारिवशात् कार्यं जनयन्तीति तत्रोच्यते सहकारिभिर्य उपकारः क्रियते शेषश्चेदुत्पद्यते तदुत्पत्तावन्यः सहकारीत्यनवस्था शक्तिनित्यत्वे तु नित्यकार्यप्रसङ्गादित्युक्तो दोषः । अपि च सुवर्णार्थिनः कुण्डलग्रहणं न प्राप्नोति सुवर्णकुण्डलयोरत्यन्तभेदात् अपि च पञ्चपलिके पटे परिमाणाधिक्यप्रसङ्गः श्रुतिदर्शनबाह्यत्वाद्वाऽसत्कार्यवादो वैशेषिकपक्षोऽप्यसङ्गत इति । तद्वदेव प्रमाणशून्यवादिपक्षोऽप्यभावाद्भावोत्पत्तिरुभयोरभाव इति दर्शनं निरस्तं वेदितव्यम् । युक्तिर्व्याख्याता शब्दान्तराद्वा सदेव सौम्येदमग्र आसीदिति । असच्छब्दादन्यः सच्छब्दान्तरं कथमसतः सज्जायेत इत्याक्षिप्य सदेव सौम्येदमग्र आसीदिति ॥ १८ ॥

पटवच्च ॥ १९ ॥

यथा पटः संवेष्टितः कचित् प्रसारितो वा न भिद्यते तथा कारणं स्वरूपावस्थं कार्यावस्थं च न भिद्यते ॥ १९ ॥

यथा च प्राणादि ॥ २० ॥

यथा प्राणापानादि हृदि वृत्तिर्वायुर्नाभिनासिकादिषु स्थानेषु

(१) अनित्यत्वात् – पा० २ पु० ।

प्राणायामेन निरुद्धः स्वरूपेणावतिष्ठते निरोधान्मुक्तः पञ्चधा तथा ब्रह्मेति ॥ २० ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२१॥

अथाक्षेपः क्रियते । हितस्याकरणमहितस्य चानुष्ठानमादिग्रहणादिदं जगन्मायारचितमिति स्मरणं प्रसज्यत इत्येवमादिदोषपरिग्रहः । कस्मादितरव्यपदेशादितरस्य शारीरस्य ब्रह्मत्वव्यपदेशात् तत्त्वमसीति ततश्च ब्रह्मणो यत् स्रष्टृत्वं तत् शारीरस्येति प्राप्ते ऽभिधीयते ॥ २१ ॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पक्षं व्यावर्तयति । शारीरादधिकं सांसारिकधर्मातीतं सर्वेशं स्रष्टारं ब्रूमः सता सौम्य तदा सम्पन्नो भवति शारीर आत्मोपक्षेनात्मनान्वारूढ उत्सर्जतीत्येवं जातीयकात् भेदनिर्देशात् ईश्वरोऽन्यः स्रष्टा । यदि वायं जीवः स्रष्टाभ्युपगम्येत प्रादुःस्युरेते दोषाः जीवपरयोश्च भेदः पुरस्तात् प्रतिष्ठापितो नेश्वर एव संसारीति यथा वात्यन्तभिन्नो जीवो न भवति तथा वक्ष्यामः । ननु भेदाभेदौ कथं परस्परविरुद्धौ सम्भवेतां नैष दोषः ।

प्रमाणतश्चेत् प्रतीयते को विरोधोयमुच्यते ।
विरोधे चाविरोधे च प्रमाणं कारणं मतम् ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

अपि च यथा लोके पृथिवीत्वाविशेषे ऽपि पद्मरागादीनां प्रहीणपाषाणादीनां चान्योन्यभेदो दृश्यते । आदिग्रहणेनान्नपानादीनां केशनखादीनां च ग्रहणम् । तथा ब्रह्मण एकत्वे ऽपि जीवप्राज्ञयोर्भेदो न विरुध्यते । तदनुपपत्तिः परोक्तदोषानुपपत्तिः ॥ २३ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

अन्यथा पुनराक्षेपः क्रियते । ननु चोदनायाः स्वतः प्रामाण्यात् सिद्धं जगत्कारणं ब्रह्म कथमाक्षेपः सत्यमेवम् तथाप्यनुमानविरो-

धान्नासौ चोदनार्थः शक्यतेऽवधारयितुम् अतस्तदनैकान्तिकोपादानार्थमारभ्यते। कुम्भकारादीनामनेकसाधनोपसंहारेण प्रवृत्तिदर्शनाद्बाह्यकारकोपादानमुपसंहारः प्रागुत्पत्तेश्च नास्ति बाह्यसाधनं सामग्री ब्रह्मणस्तदसहायं ब्रह्म प्रवृत्त मिति न शक्यमवधारयितुमिति प्राप्ते प्रतिविधीयते। ब्रह्म स्वत एव परिणमते तत्स्वाभाव्यात्। यथा क्षीरं दधिभावाय अम्भो हिमभावाय न तु तत्राप्यातञ्चनमाधारभूतं च द्रव्यमपेक्ष्यते। नैतदस्ति ब्रह्मत्वात् तस्य स्थितो स्थानी व्याप्रियते आतञ्चनेनाम्लादिना त्वार्यते पयसः परिणामशक्तिः स्वत एव न कदाचिदम्भसा दधि सम्पादयितुं शक्यते। तन्तुनाभश्च स्वत एव प्रवर्तते। कुम्भकारादीनामनीश्वरत्वात् स्वतः सामर्थ्याभावात् साधनान्तरापेक्षा युक्ता। ब्रह्म पुनः सर्वज्ञं सर्वशक्ति यः सर्वज्ञः सर्ववित् परास्य शक्तिर्विविधैव श्रूयते इति। हीति हैतौ ॥ २४ ॥

## देवादिवदपि लोके ॥ २५ ॥

अपिशब्दः सम्भावनायां न केवलमचेतनसादृश्यं चेतनैरप्यस्ति इत्याह। यथा देवा महर्षयः बाह्यसाधनमनपेक्ष्य विचित्राणि कार्याणि वितन्वते अणिमाद्यैश्वर्ययोगादिति योगशास्त्रपुराणादिषु वर्ण्यते। यथोर्णनाभः स्वयं प्रवर्तते। यथा बलाका रेतःसेचनमन्तरेण गर्भं दधत इत्यादिग्रहणम् दृष्टान्तप्रतिदृष्टान्तानन्त्यादागमसिद्धस्यार्थस्यानुमानेन दूषणमृणां धनं वा न शक्यते कर्तुमिति ॥ २५ ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

पुनरप्यन्यथाक्षिप्यते। निरवयवं ब्रह्म यदि कार्याकारेण परिणमते कृत्स्नप्रशक्तिः क्षीरवतश्च यदिदं दृश्यते स्थूलं जगदेतदेव ब्रह्मेत्युपदेशशास्त्रमनर्थकं स्यात् प्रत्यक्षादिसिद्धत्वात्। यदि च सावयवं स्यात् ततोऽस्यैकदेशः परिणमतेऽन्यैकदेशोऽवतिष्ठत इति शक्यमवकल्पयितुम्। सावयवमेवेति चेत् निरवयवत्वस्य वाचकः शब्दः कुप्येद्विरुद्ध्येतेत्यर्थः। को सौ दिव्यो ह्यमूर्तः पुरुषो निस्कलं निष्क्रियं शान्तं निरवद्य(१)मस्थूलमनणवहस्वमित्यतश्च ब्रह्मणः परिणामानुपपत्तेः प्रधानमेष्टव्यमिति तात्पर्यार्थोऽत्र कश्चिदाह कृत्स्नैकदेशशब्दौ ब्रह्मणि

(१) निरवयवं – पा० २ पु०।

न सम्भवतः सावयवे हि द्रव्ये तौ दृश्येते इति नैतत् सन्दिग्धम् । न ह्यत्र शब्दप्रयोगो विचार्यते । सावयवत्वे निरवयवत्वे च ब्रह्मणः परिणामानुपपत्तिः पूर्वपक्षवादिना प्रसाध्यते । तत्र समाधानमनुक्त्वा स्वपक्षसिद्धिर्नास्ति । तत्रोच्यते ॥ २६ ॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्दः पक्षनिवृत्तौ । न कृत्स्नप्रसक्तिरप्रच्युतस्वरूपं ब्रह्म परिणमते । कथं श्रुतेः । सेयं देवतेक्षत हन्ताहमिमास्तिस्रो देवता इति तेजोपबन्नव्यतिरिक्तां परां देवतां दर्शयति । शब्दप्रमाणत्वाच्चास्यार्थस्य न स्वाविकल्पेन चालयितुं शक्यते । तदनन्यत्वमित्यत्र चास्माभिरुक्तं शक्तिविशेषलक्षणः परिणाम इतीश्वरस्य द्वे शक्ती भवतो भोग्यशक्तिरेका भोक्तृशक्तिश्चापराप्यभोग्यशक्तिश्च साकाशादिरूपेणाचेतनपरिणामापत्तेर्भोक्तृशक्तिः सा चेतना जीवरूपेणावतिष्ठते । तत्र यथा सूर्यः स्वरश्मीन्विक्षिप्योपसंहरति एवं प्रपञ्चनानन्तभेदां शक्तिं विक्षिप्योपसंहरति परमेश्वर इत्युपपन्नम् । क्षमापादादिनापि लोके निरवयवस्याशरीरस्य मायाकर्तृत्वं न दृष्टमिति पूर्वशक्तिरभ्युपगन्तव्या ततो वरं यथाभूतसृष्टिविषया शक्तिरभ्युपगम्यताम् ॥ २७ ॥

## आत्मनि चैवं विचित्रास्त्वहि ॥ २८ ॥

नैतदत्यन्ताश्चर्यं निरवयवस्य स्वरूपाप्रच्युतिः कार्य्यसृष्टिश्चेति । यथा विज्ञानात्मनि स्वप्नदृशि चित्राः दृष्टयः श्रूयन्ते न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत इति तथेश्वरस्य भवतीति ॥ २८ ॥

## स्वपक्षदोषाच्च ॥ २९ ॥

सांख्यस्यापि स्वपक्षे समानो दोषस्त्रिगुणं निरवयवं प्रधानं महदाद्याकारेण परिणमते इत्युपगच्छतः कृत्स्नप्रसक्तिर्निरवयवत्वप्रतिज्ञाहानिर्वेति समानो दोषो वैशेषिकस्यापि परमाणूनां निरवयवत्वाभ्युपमात् ॥ २९ ॥

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

कथं पुनर्गम्यते सर्वशक्त्युपेता परा देवतेति तदुच्यते सर्वोपेता । चशब्दः सम्भावनायाम् । तद्दर्शनात्सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस इति ॥ ३० ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

सर्वशक्तिमत्त्वे सत्यपि विगतकार्यकरणत्वान्न कार्ये व्याप्रियत इति चेत्तत्रेदं वक्तव्यं तदुक्तं शब्दमूलत्वादिति ॥ ३१ ॥

न प्रयोजनत्वात् ॥ ३२ ॥

अन्यथाक्षिप्यते न परा देवता सृष्टौ प्रवर्तते । आप्तकामा हि श्रूयते तस्याः प्रवृत्तौ प्रयोजनाभावादिह च प्रयोजनवत्त्वात् प्रवृत्तीनाम् । तथाचोक्तं मीमांसकैः जगच्चासृजतस्तस्य किं नामेष्टं न सिध्यति । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते । अथास्ति प्रयोजनमस्मदादितुल्यत्वादाप्तकामता निवर्तते अत्रोच्यते ॥ ३२ ॥

लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

तुशब्दात्पक्षो विपरिवर्तते । न तस्य प्रवृत्तौ प्रयोजनं किं तु लीलाकैवल्यं स्वरसेन या क्रीडास्वरूपा चेष्टा सा लीला तस्याः कैवल्यं केवलभावो यथा लोके राजप्रभृतीनां परिपूर्णकामानामपि क्रीडार्था प्रवृत्तिर्भवति तथेश्वरस्याप्रकाश्यापि(१) प्राणिकर्मापेक्षया सृष्टिप्रवृत्तिरुपपद्यते न च स्वभावः पर्य्यनुयोक्तुं शक्यते ॥ ३३ ॥

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

यदि तर्हीश्वरो लीलया प्रवर्तते तस्य वैषम्यनैर्घृण्ये प्रसज्येयातां नीचमध्यमोत्तमाः प्राणिनो विदधतः । वैषम्यं नाम रागद्वेषमोहयोगस्ततश्चानीश्वरत्वमस्मदादिवन्नैर्घृण्यं क्रूरभावश्चण्ड-

---

(१) आप्तकामस्यापि पा० पु० ।

ता नरके पातयत इति चेन्नेति ब्रूमः । कस्मात्प्राणिकर्मसापेक्षत्वादीश्वरस्य स्वकर्मवशेनैव प्राणिनां वैचित्र्यम् । यथा शालिकोद्रवादिबीजकृतमङ्कुरादिवैचित्र्यं पर्जन्यः साधारणकारणमेवमीश्वरो ऽपि । तथाहि कर्मानुरूपां प्रकृतिमीश्वरस्य कौषीतकीनां श्रुतिर्दर्शयति एष त एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यः उन्निनीषत एष त एवासाधुकर्मणो ऽनुषज्जति तं यमधो निनीषत इति । केचिदत्राधिकरणानुपयोगिनीं प्रमाणशून्यां प्रक्रियां रचयन्ति । अविद्यानिबन्धनो ऽन्तर्यामिसर्गः कर्मबन्धनो मनुष्यादिसर्ग इति । तदसदन्तर्यामिपरमात्मनोः नियन्तृरूपाशक्तिः पारमार्थिकी न हि सा केन चित्कल्पिता येनाविद्यानिबन्धनाप्यस्मन्मृगतृष्णादिवदुक्तं च पुरस्तात्परमात्मा सर्वज्ञः सर्वशक्तिरिति ॥ ३४ ॥

अकस्माद्विभागादिति चेन्नानादित्वात् ॥ ३५ ॥

अत्राह प्रलयकाले सुषुप्तावस्थायां वावतिष्ठते ॥ ३५ ॥

उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

कथं पुनरनादित्वं तदुच्यते । यद्यनादिः संसारो न स्यात पूर्वकृतकर्माभावाद्वैचित्र्यं नोपपद्यते किञ्चोपपद्यते बीजाङ्कुरन्यायेनानादित्वं कर्मनिमित्ता शरीरोत्पत्तिस्तन्निमित्ता च कर्मोत्पत्तिरित्यत्र । केचिच्चोदयन्ति बीजाङ्कुरदृष्टान्तो न युक्तः । कस्मात्। इतरेतराश्रयत्वात् । किं बीजं पूर्वमुताङ्कुर इति । न तत्र पूर्वापरव्यवस्था शक्या निरूपयितुम् । यत् पूर्वं तत् कारणं यत् परं तत् फलमिति कार्यकारणभावो व्यवस्थाप्यते । तदिहाशक्यमित्यत्र प्रतिविधीयते । नात्र बीजाङ्कुरजात्योः कार्यकारणभावः किं तु व्यक्तीनामेव । न च तत्रेतराश्रयता । पूर्वसिद्धाद्बीजादङ्कुरो जायते तच्च बीजं पूर्वसिद्धादङ्कुरादिति विस्पष्ट एव कार्यकारणभावो भ्रान्त्या तु दूषणकल्पनमपि चोपलभ्यते । अनादित्वं सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयद्यथा पूर्वस्मिन् कल्पे कृतवानित्यर्थः । अनेन जीवेनात्मनानुप्रविश्येति प्राणधारणवचनेन जीवशब्देन परामर्शीभूतेन च सम्ब-

न्धेनायं व्यपदेशो नाभविष्यता भूतस्य प्रमाणसिद्धत्वादिति ॥ ३६ ॥

सर्वधर्मोपपत्तेः ॥ ३७ ॥

स्वपक्षोपसंहारार्थं सूत्रम् । सर्वधर्मा सर्वशक्तिरित्येवमादयस्ते च ब्रह्मणि जगत्कारणे परिगृह्यमाणे उपपद्यन्ते । तस्माद्ब्रह्मैव जगत्कारणमिति सिद्धम् ॥ ३७ ॥

इति श्रीभास्कराचार्यविरचिते ब्रह्मसूत्रभाष्ये
द्वितीयाध्यायस्य प्रथमः पादः ॥



# द्वितीयाध्याये द्वितीयः पादः ।

रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

स्वपक्षस्थापनं कृत्वा परपक्षनिराकरणायेदानीमारभ्यते । ननु स्वपक्षस्थापनमेव मोक्षार्थिभिः कर्त्तव्यं किं परपक्षदूषणेनेति । सम्यगाह भवान् किं तु स्वसिद्धान्त एव स्थितिं न लभते प्रतिपक्षनिराकरणेन विना । तर्कशास्त्राणामपि मोक्षमार्गप्रतिपादनाय प्रवृत्तत्वात्परतन्त्रप्रज्ञाः प्रायेण प्राणिनस्तेष्वेवावलम्बेरन्नागमदर्शनं च नाद्रियेरन्नतस्तेषामसारतोपपादनाय प्रारभ्यते । निर्णयार्थं वेदशास्त्रं सर्वप्रमाणैस्तर्केण च स्वपक्षदूषणं चान्तरेण न सिध्यति । तथा चोक्तं न्यायशास्त्रे तत्त्वावसानो वाद इति । वादश्चायं यत्र शिष्येभ्यः तत्त्वं प्रतिपाद्यते । अन्यत्र जल्पो भवति । तथा लक्षणमपि(१) पादेन कृतं प्रमाणतर्कसाधनोपालम्भः स्वसिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः । सप्रतिपक्षस्थापनाहीनो वितण्डेति । तत्र सांख्या मन्यन्ते त्रिगुणमचेतनं प्रधानं जगत्कारणं तस्यास्तित्वे पञ्चहेतूनन्वयादीनाचक्षते ।

अन्वयात्परिमाणाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्येति ॥

तत्रान्वयस्तावत्सुखदुःखमोहान्विताः बाह्याध्यात्मिका भेदा दृश्यन्ते ये च यदन्विता दृश्यन्ते तदेककारणपूर्वकास्ते । यथा शरावादयो मृदान्वितास्तत्पूर्वकास्तद्वदत्रापि सुखदुःखमोहात्मकं त्रिगुणं कारणमनुमीयते । द्वितीयो हेतुः परिमाणादिति । द्विविधं च परिमाणं रूपपरिमाणं संख्यापरिमाणं च महदहङ्कारः पञ्चतन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतानीति । ये च

---

( १ ) मुपपादनेति द्वि० पु० पा० ।

परिमितास्ते च सामान्यकारणपूर्वकाः यथा शरावादय एव मेवमहदादयः परिमितास्तेषामेकं सामान्यकारणमस्तीत्यनुमीयते इत्यत्र वदामो ऽनुमीयत इत्यनुमानं प्रधानं जगत्कारणं कुतो रचनानुपपत्तेः । कर्मानुरूपभोगसिध्यर्थं विचित्रं जगद्विरचयितुं न शक्नोत्यचेतनत्वात्पाषणादिवत् । चेतनावद्भिः प्रज्ञावद्भिः शिल्पिभिः प्रसादरथशयनादिभोग्यं वस्तुजातं क्रियमाणं दृश्यत इति वैधर्म्योदाहरणमन्वयाद्यनुपपत्तेश्चेति चशब्दो न हि सुखदुःखमोहान्विता रूपादयो ऽवभासन्ते । सुखादयश्चित्तधर्माः प्रतिपुरुषमन्तरे च सम्पद्यन्ते न बाह्यार्थाकारतयानुगताः बाह्यविषयनिमित्तास्तूत्पद्यन्ते चेतनस्यात्मीयवासनानुरूपेण । तस्मादसिद्धो हेतुरन्वयादिति । दृष्टान्ते पुनः प्रत्यक्षो ऽन्वयस्त्रिविधो हेत्वाभासो ऽसिद्धोनैकान्तिको विरुद्धश्चेति । पक्षधर्मतया यो नास्ति सो ऽसिद्धो नाम । यथा शब्दानित्यत्वे साध्ये उत्पत्तिमत्त्वम् शब्दश्चाक्षुषत्वादिति । पक्षप्रतिपक्षयोर्वर्त्तमानो ऽनैकान्तिको यथा नित्यः शब्दः प्रमेयत्वादिति । इष्टविघातकृद्विरुद्धो यथा शब्दनित्यत्वे साध्ये उत्पत्तिमत्त्वम् । शक्तितः प्रवृत्तेरित्यादयो हेतवो ब्रह्मण्युपपद्यन्ते ॥ १ ॥

## प्रवृत्तेश्च ॥ २ ॥

अनुपपत्तेरिति प्रवृत्तेः । इतश्चानुपपन्नं कापिलं मतमचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेः चेतनाधिष्ठितानां रथादीनां प्रवृत्तिदर्शनात् । न हि मृदादयो रथादयो वा स्वकार्येषु स्वयं प्रवर्त्तमाना दृश्यन्ते । ननु केवलस्यापि चेतनस्य प्रवृत्तिशक्तिर्न दृष्टा कथं ब्रह्मणः प्रवृत्तिशक्तिरिति चेदुक्तमत्र सर्वशक्तित्वादिति । नास्माभिरनुमानेन कारणं कल्प्यते ॥ २ ॥

## पयो ऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

ननु चाचेतनस्यापि प्रवृत्तिर्दृष्टा यथावत्सविवृद्धये पयसो ऽम्बुनश्च स्यन्दनं लोकानामनुग्रहायेति चेन्न । तत्रापि निमित्तान्तरमस्ति । स्नेहाद्वत्सविवृद्धये धेनुः प्रवृत्तयति पयो द्रवत्वाच्च क्षरति वत्सगोपनेन । अप च निम्नदेशापेक्षया द्रवत्वात्स्यन्दते । चेतनाधिष्ठानं

तु सर्वत्र श्रुतिसिद्धम् । यो ऽप्सु तिष्ठन्नेतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्यो ऽन्या नद्यः स्यन्दन्त इति । प्रत्यक्षत्वाद्वा नोपपत्तिः । न हि दृष्टे ऽनुपपन्नं नाम गुरुत्वात्सावयवत्वाच्च क्षरणं युज्यते विपरीतं प्रधाने ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

व्यतिरिक्तस्य बाह्यस्य प्रवर्त्तनस्याभावात् प्रधानस्यस्वतः प्रवृत्तिः सा च नित्या स्यादनपेक्षत्वात्ततश्च सर्वदा सर्ग एव स्यात् ॥ ४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

यथा तृणोदकमुपयुक्तं क्षीरभावेन परिणमते तथा प्रधानं महदाद्याकारेण परिणमत इत्युच्यते न तृणादिवत् परिणामो वक्तुं शक्यते ऽन्यत्राभावादनडुहि । न हि सौरभेयभक्षितं तृणं क्षीरीभवति किं तर्हि धेनूपयुक्तमेवातो न स्वत एवेति शक्यं वक्तुं सामग्रीविशेषापेक्षित्वात् ॥ ५ ॥

## अभ्युपगमे ऽप्यर्थाभावात् ॥ ६ ॥

एवं तावत् स्वतः प्रवृत्तिसामर्थ्यं नास्तीत्युक्तम् । यद्यपि भवतो बुद्धिमनुरुध्यमानैरस्माभिः प्रवृत्तिरभ्युपगम्येत तथापि तस्याः प्रवृत्तेरर्थाभावात् प्रयोजनाभावादित्यर्थो न तस्य चेतनत्वाद्भोगो न पुरुषस्य मुक्तरूपत्वान्नापवर्गार्था सा सततद्भोगप्रसङ्गात् अपवर्गाभावो न चोभयार्थाप्रवृत्तिर्विरोधात् । प्राक्प्रवृत्तेश्च पुरुषस्य मुक्तरूपत्वात् नापवर्गार्था । न चौत्सुक्यनिवृत्त्यर्था चेतनधर्मत्वादौत्सुक्यस्य स्पृहायोगस्याचेतनं च प्रधानम् ॥ ६ ॥

## पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

सार्थभ्रष्टावन्धपङ्गू ग्रामगमनार्थिनौ तत्र पङ्गुरन्धमधिष्ठाय प्रवर्त्तयति । अश्म चायस्कान्तो ऽयं प्रवर्त्तयति । तथा भोक्ता पुरुषः प्रधानं प्रवर्त्तयति चेत् तदुत्तरं तथापीति । निष्क्रियत्वाभ्यु-

पगमात् आत्मनः प्रवर्त्तकत्वाभ्युपगमे ऽभ्युपगमविरोधः। पङ्गु पुनर्वा चान्धं प्रवर्त्तयति। अयस्कान्तोपि च समीपादवस्थाने नायः प्रवर्त्तयति। यदि च सन्निधिमात्रेणाप्रवर्त्तकः प्रधानपुरुषसन्निधिनित्यत्वान्नित्यप्रवृत्तेः प्रलयाभावोपसर्गाभावश्च॥ ७॥

## अङ्गित्वानुपपत्तेः॥ ८॥

इतश्चाप्रवृत्तिः सत्त्वरजस्तमसां प्रलयकाले साम्येनावस्थितानां परस्पराङ्गाङ्गित्वानुपपत्तेः। वैषम्यहेत्वभावान्न त्वेवं सांख्या वदन्ति।

प्रकृतिं पुरुषं चैव प्रविश्याशु महेश्वरः।
क्षोभयामास योगेन परेशः परमेश्वर इति।

सत्यमीश्वराभ्युपगमे वेदान्तवाद एवापद्यते। सदेवेति श्रुतिप्रामाण्यात्॥ ८॥

## अन्यथानुमितौ शक्तिनियोगात्॥ ९॥

अन्यथा प्रकारान्तरेणानुमितावनुमाने क्रियमाणे साम्यावस्थितानामपि वैषम्यं भवति। चलं गुणवृत्तमित्यभ्युपगमात्। यथा कामं सृष्टिस्थितिप्रलयक्षणं सम्भवति तथा कारणस्य शक्तिः कल्प्यत इति चेदेवमपि ह्यशक्तिवियोगादृद्रचनानुपपत्त्यादयो दोषा दुष्परिहरा एव॥ ९॥

## विप्रतिषेधाच्चासमञ्जसम्॥ १०॥

वेदान्तविरोधाच्चासमञ्जसं कापिलं मतम्। ननु तवाप्यसमञ्जसमैकात्म्यं कथं तप्यतापकभाव इत्यत्रोच्यते। न मूलकारणस्य ब्रह्मणो निरतिशयानन्दस्वरूपत्वात्तप्यतापकभावो ऽस्ति तदंशस्तु जीवस्तप्यस्तापकं दुःखं स्वकर्मोपगृहीतं रजस्तमःप्रभवं संसारावस्थायां तदिष्टमेवास्माकं तस्यापि मुक्तस्य परमात्मसम्पत्तेः सर्वं तदात्मकं सम्पद्यते। न चात्मन आत्मैव तापको भवति। न हि वह्नेर्वह्निर्दग्धा न वायोर्वायुः पीडयिता किंतु भेददर्शिनो ऽन्यस्य देवदत्तादेरिति॥ १०॥

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

वैशेषिकपरीक्षां कर्त्तुकामो ब्रह्मवादेन तदुक्तं दूषणं तदीयया प्रक्रियया प्रथममुद्धरिष्यति । सर्वो हि तार्किकः स्वप्रक्रियानुगतमुच्यमानमनुमन्यते । तेषामेषा प्रक्रिया । द्रव्यं द्रव्यान्तरमारभते गुणश्च गुणान्तरम् । रक्तेभ्यस्तन्तुभ्यो रक्तपटदर्शनात् । द्वाभ्यां परिमण्डलपरिमाणाभ्यां परमाणुभ्यां द्व्यणुकं नाम कार्यं जायते । द्वयोः परमाण्वोर्यासौ द्वित्वसंख्या सा द्व्यणुके ऽणुत्वं ह्रस्वत्वं च परिमाणान्तरमारभते पारिमाण्डिल्यं चानारम्भकम् । तथा त्रिभिर्द्व्यणुकैस्त्र्यणुकमारभ्यते । तेषु च या बहुत्वसंख्या सा महत्त्वं दीर्घत्वं च परिमाणान्तरमारभते । द्व्यणुकगतं सणुत्वं ह्रस्वत्वं चानारम्भकमिति । तत्रेदमुच्यते । यथा तव द्व्यणुकेभ्यो ऽणुह्रस्वपरिमाणेभ्यस्त्र्यणुकं महद्दीर्घं च जायते । वाशब्दादध्याहृत्य योजना कर्तव्या परिमण्डलाभ्यां(१) अणुह्रस्वं द्व्यणुकं जायते ह्रस्वपरिमण्डलाभ्यामिति च ह्रस्वात् द्व्यणुकात्परिमण्डलाच्च परमाणोरिति विभज्य योजनीयमेवं ममापि ब्रह्मणश्चेतनात् चेतनं जगदुत्पद्यत इति विरोधो न चैतद्वक्तुं शक्यं द्व्यणुके त्र्यणुके चापरिमाणान्तराक्रान्तत्वात्पारिमाण्डल्यमणुत्वं नारम्भकमिति । तस्मादुपपन्नं कार्यं क्षणमात्रं निर्गुणं भूत्वा कारणगुणेन सम्बध्यत इत्यभ्युपगमात् । तस्मात् कारणगतं समानजातीयं पारिमाण्डल्यान्तरं स्वभावादेव नारभते द्वित्वम् । संख्या पुनः समानजातीयत्वात् संख्यान्तरमारभतापि न पुनरणुत्वं ह्रस्वत्वं च भिन्नजातीयत्वात् । तस्मात्पारिमाण्डल्यमणुत्वं ह्रस्वत्वं च स्वभावादेवानारम्भकमित्यभ्युपेयमेव ब्रह्मगता चेतना चेतनान्तरं स्वभावादेव नारभत इति वैशेषिकप्रक्रियामप्याश्रित्य कार्यकारणयोर्वैलक्षण्यमस्तीति प्रदर्शनार्थमिदं सूत्रम् । यथा ह्रस्वाभ्यां ग्रथिताभ्यां रज्जुभ्यां दीर्घा रज्जुरारभ्यते । यथा परिमण्डलाभ्यां मृत्पिण्डाभ्यामेको महानारभ्यत इति केचिद्व्याचक्षते तदयुक्तम् । न विलक्षणत्वादिति तत्रैवोक्तत्वात् पुनरुक्तमिदं प्राप्नोत्येवं वर्णयद्भिः सूत्रकारस्य श्रोत्रि-

(१) परिमण्डलाभ्यां परमाणुभ्यामिति. द्वि. पु. पाठः ।

यत्वमापादितम् । तस्माद्यथोक्त एवाभिप्रायः ॥ ११ ॥

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

अथ वैशेषिकमतं परीक्ष्यते । तत्रैवं पार्थिवाप्यतैजसवायवीयाश्चतुर्विधाः परमाणवो नित्याः प्रलयकाले ऽवतिष्ठन्ति । सर्वत्र च त्रिभ्यः कारणेभ्यः कार्यं निष्पद्यत इति मन्यन्ते समवाय्यसमवायिनिमित्तकारणैः । तन्तवः समवायि कारणं तेषां पटसंयोगो ऽसमवायिकारणं तुरीवेमकुविन्दादिनिमित्तकारणम् । तथा परमाणवः समवायिकारणं तत्संयोगो ऽसमवायिकारणमदृष्टमीश्वरेच्छा च निमित्तकारणम् । तत्रेश्वरेच्छावशनाद्यं कर्म वायवीयेष्वणुषूत्पद्यते । ततः संयोगे द्वाभ्यां द्व्यणुकमुत्पद्यते । तत्र द्व्यणुकादिक्रमेण महान्वायुरुत्पन्नो नभसि दोधूयमानस्तिष्ठति । तथा तैजसेभ्यो ऽग्निरुत्पन्नो जाज्वल्यमानस्तिष्ठति । तथापोभ्यो महासलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति । तथा पार्थिवेभ्यः पृथिवी निश्चला तिष्ठतीति । तत्रेदमुच्यते । नाद्यं कर्माणुषु सम्भवति । प्रलयाभिघातादीनां तदानीमभावात् । अथात्मनां यददृष्टं तद्वशाद्भवतीति चेत्तत् पुनरदृष्टमात्मगतं वा निमित्तं परमाणुगतं वोभयथा न सम्भवति । न ह्यन्यत्र वर्तमानं कारणमन्यत्र क्रियाहेतुः भवति प्रसङ्गादचेतनत्वाच्च नादृष्टं क्रियाहेतुः । चेतनाधिष्ठितं हि रथादि क्रियां प्रतिपद्यते । न चात्मनां तदा चैतन्यमस्ति शरीरोत्तरकालभावित्वात् । न चादृष्टमणुषु समवेतं कर्तृसमवायित्वात् । न चादृष्टवतात्मना तत्संयोगात्कर्मोत्पत्तिर्नित्यसर्गप्रसङ्गात् । एवं प्रलयकाले विभागार्थं कर्म न सिद्धमतस्तदभावः सृष्टिप्रलययोरभाव इत्यनुपपन्नं दर्शनम् ॥ १२ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

अयुतसिद्धानामाधाराधेयभूतानामिहप्रत्ययहेतुः समवायो यथेह तन्तुषु पटः इह गवि गोत्वं इह पटे शुक्लत्वं इति । कार्यकारणयोः समान्यविषयोर्गुणगुणिनोश्च सम्बन्धस्त्रिष्वपि समवायलक्षणः स चैको नित्यः सर्वगतो व्योमवदिष्यते । युतसिद्धानां तु संयोगः पृथक् सिद्धानां यथा रज्जुघटयोः । तत्रेदमुच्यते । यथा द्व्यणुक-

समवायलक्षणेन सम्बन्धेन स्वकारणे समवैत्यन्ताभिन्नत्वात्तथा समवायो ऽपि समवायिभ्यां सम्बन्धे समवायान्तरेण सम्बध्यते सो ऽप्यन्येनेत्यनवस्था । अथ समवायः स्वयं सम्बन्धक इति न समवायान्तरमेपक्षत इति चेत् संयोगो ऽपि तर्हि समवायं नापेक्षते । संयोगः किल संयोगिभ्यां सम्बद्धो ऽसमवायिपूर्वक इति मन्यते सा प्रतिज्ञा हीयते । न च संयोगो गुणत्वादपेक्षते इति वक्तुं शक्यते । विभाषिकत्वात् समवायो ऽपि गुण इति भाषितुं शक्यते । न चायुतसिद्धत्वं कार्यकारणयोः पूर्वसिद्धं कारणं पश्चात्कालीनं कार्यं तत्रापृथक्सिद्धत्वमनयोः कथम् । अथान्यतरापेक्षमयुतसिद्धत्वं वर्ण्येत तथापि द्वयोः सतोः सम्बन्ध इति कृत्वोत्पन्नं कार्यं क्षणमात्रं पृथगवस्थाय समवायेन सम्बध्येतेति पूर्वोक्तं दूषणमस्त्येव । कारणकालवर्तित्वं सर्वेषामस्तीति सर्वेषामयुतसिद्धत्वं स्यादर्थोत्पत्तिरेव समवाय इति । तदुक्तं समवायस्य नित्यत्वादुत्पत्तेश्च नित्यत्वे वा कार्यानित्यत्वप्रसङ्ग इति कारणव्यापारो ऽनर्थकः स्यात् । तस्मात्तादात्म्यलक्षण एव सम्बन्धो न समवायकृत इति ॥ १३ ॥

## नित्यमेव भावात् ॥ १४ ॥

किं परमाणः प्रवृत्तिस्वभावा निवृत्तिस्वभावा घोभयस्वभावानुभयस्वभावा वा गत्यन्तराभावात् सर्वथा नोपपद्यते । प्रवृत्तिस्वभावत्वे नित्यमेव प्रवर्त्यभावात् प्रलयाभावः स्यान्निवृत्तिस्वभावत्वे सर्गाभावः स्यादुभयस्वभावता युगपद्विरुध्येतेति ॥ १४ ॥

## रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

रूपादिमन्तः परमाणवो ऽभ्युपगम्यन्ते पृथिव्यादौ कार्ये रूपादिदर्शनात् । ततश्च नित्यत्वविपर्ययो ऽनित्यत्वं परमाणूनां स्यात् । रूपादिमतां घटादीनामनित्यत्वदर्शनात् । अथ रूपादिमत्त्वं नेष्यते कार्ये रूपादिमन्न स्यात् । अतो रूपादिमन्तो नित्याश्चानित्याश्चेति अनुमानविरुद्धाः । तत्र निमित्तं वा किं च परिवर्त्तुलाः परमाणवः तत्र यावन्त्यो दिशस्तावन्तो ऽवयवाः प्रसज्येरंस्तेषामप्यवयवा-

नां तथैवेति न कदाचिदप्यवसानं सम्भवति। तथा च दिङ्नागेनोक्तं षट्केन युगपद्योगात्परमाणोः षडंशतेति ॥ १५ ॥

## उभयता च दोषात् ॥ १६ ॥

किमुपचितगुणाः परमाणवः किं वापचितगुणाः। यदि तावदुपचितगुणाः तदा सर्वे सर्वत्र स्युः। अप्स्वपि गन्धरसौ तेजसि रूपरसगन्धाः वायौ रूपरसगन्धस्पर्शा नभसि। अथापचितगुणाः तदा सर्वेषामेकैको गुणः स्यात्। ततश्च तेजसि स्पर्शो न स्याद्रसे रूपस्पर्शौ पृथिव्यां रूपस्पर्शरसा न स्युः। अथ केचिदपचितगुणाः केचिदुपचितगुणाः इति वैचित्र्यं परिकल्प्येत। ततोऽपचितगुणानां परमाणुत्वं हीयेत। गुणोपनिबन्धनं हि दृश्यादृश्याभूतमूर्त्ताद्यवान्तरं वैचित्र्यं चतुर्विधानां परमाणूनां स्वतो भेदात्। अस्मत्पक्षे तु सर्वज्ञेन ब्रह्मणा व्यवहारार्थमेकगुणं नभो द्विगुणो वायुस्त्रिगुणोऽग्निश्चतुर्गुणं जलं पञ्चगुणा अवनिरिति न किञ्चिदप्यनुपपन्नं नाम ॥१६॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

मन्वादिभिरप्येकेनाङ्गेनापरिग्रहादत्यन्तमनपेक्ष्यं वैशेषिकमतं श्रेयस्कामैः। अत्यन्तमनादर्तव्यं वैशेषिकमतमित्यभिप्रायः ॥ १७ ॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

असत्कार्यवादी वैशेषिको निराकृतस्तत्सादृश्यात्तदन्तरं बौद्धसिद्धान्तो निरस्यते। स च त्रेधा भिद्यते। बाह्यार्थास्तित्ववादिनः केचित्केचिद्विज्ञानमात्रास्तित्ववादिनः शून्यवादिनश्चान्ये। ग्राह्यग्राहकाकारविमुक्ता संवित्सन्ततिर्निर्वातस्थप्रदीपवदासंस्कारक्षयात् क्षणपरम्परयावतिष्ठते संस्कारक्षये सा प्रदीपवदेव निर्वाणमृच्छति। सेयमभावप्राप्तिरपवर्ग इति मन्यन्ते। अपरे तु संतत्यविच्छेदमिच्छन्ति। ये तत्र बाह्यार्थास्तित्ववादिनः सौत्रान्तिकास्तेषामभिमताः पञ्चस्कन्धा रूपविज्ञानवेदनासंज्ञासंस्काराख्याः। तत्र रूपस्कन्धो नाम पृथिव्यादीनि चत्वारि भौतिकाश्च शरीरेन्द्रियविषयाः। विज्ञानस्कन्धो नामाभ्यन्तरोऽहंप्रत्ययसमारूढो घटज्ञानं पटज्ञानमित्येवमविच्छेदेन वर्त्तमानोऽयमेव विज्ञानस-

न्तानः कर्त्ता भोक्ता चात्मा नान्योस्तीति । वेदनास्कन्धश्च सुखवेदना दुःखवेदना च । संज्ञानामोपलक्षणप्रत्ययो यथा स्वस्तिमती गौरिति स्वस्तिमत्तया गौरुपलक्ष्यते ध्वजेन गृहं दण्डेन पुरुष इति। संस्कारस्कन्धो नाम रागद्वेषमोहमात्सर्यभयशोकविषादादयश्चैतसिका धर्मास्ते चामी चतुर्विधाः स्कन्धाश्चित्तका उच्यन्ते । तत्र रूपरसगन्धस्पर्शाश्चतुर्विधाः पार्थिवाः परमाणवः पृथिवीरूपेण संहताः पृथिवीव्यवहारायावतिष्ठन्ते । रूपरसस्पर्शा आप्याः परमाणवः सलिलात्मना संहन्यन्ते । तथा रूपस्पर्शौ तेजोरूपेण संहतौ । तथा स्पर्शपरमाणवो वायुरित्येवमेते चतुर्विधाः क्षणिकाः परमाणवो भूतभौतिकसंहतिहेतुत्वं प्रतिपद्यन्ते। क्षणिकत्वं तु बुद्धवचनात्, क्षणिकाः सर्वे संस्काराः संस्थित्यन्त इति। संस्कारा उत्पत्तिमन्त इत्यर्थः। सर्वं वस्तुजातमुत्पत्तिविरोधात्मकमित्युक्तं भवति । यदितो ऽन्यत्तत् सर्वमवस्तुकालाकाशात्मादि चित्तश्चैत्तिकश्चान्तरो बाह्यो भूतभौतिकः सङ्घातः । तावेतौ भूतभौतिकसमुदायः लोकयात्रामावहतः। सिद्धे च लोकव्यवहारे नित्येनात्मना नास्ति प्रयोजनमिति मन्यन्ते। तत्रेदमुत्तरमुच्यते। उभयहेतुके ऽपि समुदाये ऽभ्युपगम्यमाने तदप्राप्तिः समुदायासम्भवः। न तावत्स्वतः समुदायापत्तिरचेतनत्वात् क्षणिकत्वाच्चानित्यस्य भोक्तुः प्रशासितुर्वेश्वरस्य संहर्तुरनभ्युपगन्तुः स्थूला पृथिवी सम्भवेत्परमाणवश्चातीन्द्रिया न तैर्व्यवसरो ऽस्ति येन च स्थूलेन व्यवहारः स नास्तीति लुप्यते लोकयात्रा ॥ १८ ॥

इतरेतरप्रत्ययमन्यत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥ १९ ॥

प्रत्ययशब्दः कारणवाची । इतरेतरहेतुत्वादुपपन्नमस्मद्दर्शनम्। कथमितरेतरहेतुत्वम्। यो ऽयं विज्ञानस्कन्धो ऽहम्प्रत्ययसमारूढः सन्ततिरूपेण वर्तते तस्याविद्यादयो ऽनादिकालप्रवृत्ता हेतवः स च तेषामिति अविद्या नाम विपरीतदृष्टिरनित्ये नित्यदृष्टिरमार्गे मार्गदृष्टिरिति।ततः संस्कम्भः स्कन्नः प्रादुर्भवति रागद्वेषमोहेर्षादिलक्षणः पूर्वोक्तः। ततः प्रवृत्तिः। पुण्यापुण्यात्मकं कर्म प्रवृत्तिशब्देनोच्यते ।

अस्ति कर्मास्ति विपाक इति सुगतवचनात् कर्माभ्युपगम्यते बौद्धैः। तन्निबन्धनं जन्म शरीरग्रहणम् । षडायतनं च पञ्च बुद्धीन्द्रियाणि मनश्च षडायतनमुच्यते षड्विज्ञानानि । पञ्चानामिन्द्रियाणां पञ्च-रूपादयो विषयास्तेषु पञ्चविज्ञानान्युत्पद्यन्ते । मनसस्तु तद्धर्मा वि-षयस्तदेवं प्रमातृप्रमाणप्रमेयव्यवहारसिद्धेः सर्वमुपपन्नमिति चेन्न । संहातभावानिमित्तत्वात्सङ्घातत्वं प्रत्यनिमित्तत्वान्न भू-तभौतिकसङ्घातापत्तावविद्यादीनां निमित्तत्वमुपपद्यते । पूर्वक्ष-णस्योत्तरोत्तरहेतुत्वं यदि भवेद्भवतु न पुनः सङ्घातापत्तिहेतु-त्वम् । विज्ञानस्य क्षणिकत्वात्कर्मणो ऽपि क्षणिकत्वादुत्पत्तिनिरोध-मात्रं सर्वत्र सम्भवेन्न सङ्घातापत्तौ सामर्थ्यं शक्यं कल्पयितुं प्रमाणाभावात् ॥ १९ ॥

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

एवं तावत्पूर्वक्षणस्योत्तरहेतुत्वमभ्युपगम्य सङ्घातापत्ति-र्निरस्ताथेदानीं हेतुत्वमपि नास्तीति प्रतिपाद्यते । कथमुत्तरो-त्पादे कदनुत्पन्नः शशविषाणतुल्यत्वात् । उत्पन्नो ऽपि न हे-तुरभाववत्तुच्छत्वात् । असुदुत्पन्नविनष्टस्य अनुत्पन्नाभावत्वावि-शेषात् । अथ पूर्वपूर्वक्षणविनाश उत्तरक्षणोत्पत्तिश्च युगपद्भवेतां तु-लाधटयोर्नामोन्नामवदिति तदसद्युक्तम् । तत्र मध्ये सूत्रधारणादन्त-योश्च युगपदुपस्थितयोरेकस्य गुरुत्वान्नामस्तद्धेतुश्चोन्नाम इति । न चात्रोत्तरोत्पत्तिकालेदं कार्यमिदं कारणमिति कल्पनायाम-तिप्रसङ्गो मृदन्विताः शरावादयो दृश्यन्ते सुवर्णान्विताश्च कुण्डलादयः । न चाकारसमर्पणे सामर्थ्यं क्षणिकत्वात् । तस्मा-न्नित्यपक्ष एव कार्यकारणव्यवस्था युज्यते । प्रत्यक्षप्रत्यभि-ज्ञानाच्च कुम्भादीनां नित्यत्वम् । ननु च नित्यत्वे ऽपि कार्यका-रणभावो नोपपद्यते क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । किं कुसूलस्थो व्रीहिरङ्कुरजननस्वभावो ऽथातत्स्वभाव इति । यद्यत-त्स्वभावो न कदाचिदपि जनयेदथा तत्स्वभावस्तदानीमेवो-त्पादयेत् । ततश्च यानि कर्माणि व्रीहिणा कर्तव्यानि तानि स-र्वाणि युगपत्कुर्यान्न च सामग्रीवशेनाङ्कुरं जनयेदतत्स्वभावत्वे सामग्र्या अकिञ्चित्करत्वात् । यच्चोक्तं प्रत्यभिज्ञानान्नित्यत्व-

मिति । तदनैकान्तिकं प्रदीपज्वालादिषु दर्शनात् । यदि च नित्यो भावः स्यादन्ते न नाशदर्शनं प्राप्नोति । अथ मुद्गरादिना घटस्य विनाशः क्रियत इति चेत्तदयुक्तम् । द्रव्यव्यतिरिक्तो विनाशो ऽथाव्यतिरिक्तः क्रियत इति । पूर्वस्मिन् विकल्पे घटस्य किमायातम् । यथा घटे कृते पटस्य न किञ्चिद्भवति तथा विनाशे ऽपि व्यतिरिक्ते । द्वितीये च विकल्पे घटस्वरूपमेव विनाशस्तच्च कुलालेन कृतमिति मुद्गरः किमपरं करोति । अथ मन्यसे घटस्य सम्बन्धी विनाशः क्रियत इति । कः सम्बन्धः, किं तादात्म्यलक्षणो ऽथ तदुत्पत्तिलक्षण इति । यदि घटमुद्गराभ्यां विनाशमुत्पाद्यत इति न घटस्य किञ्चित् उत्पत्तिलक्षणेन सम्बन्धेन हि पावकेन्धनाभ्यां धूमे जाते ऽग्नेः किञ्चिद्भवति । तादात्म्यलक्षणे ऽपि सम्बन्धे पूर्वोक्तं दूषणम् । तादात्म्यं तत्स्वभावता सा च कुलालेन कृतेति । तस्मात् स्वाभाविको विनाश एष्टव्य इत्यत्राभिधीयते । यो ऽयं विकल्पः कृतः स सिद्धान्तं तव बाधते । कथम् । विसदृशसन्तानोत्पत्तिप्रतिनिरोधात् यो ऽयमन्त्यो घटक्षणो ऽभिमतो यतः कपालोत्पत्तिरिष्यते स सदृशसन्तानजननस्वभावो घटक्षणत्वादतीतानन्तरघटक्षणवादित्यसौ विसदृशसन्तानस्वभाव एवाभ्युपपद्येत कुम्भकारादारभ्य कपालपङ्क्तिरेव स्यादेवं सति मुद्गरेण घटस्य सदृशसन्तानजननस्वभावता विनाश्यते विसदृशजननस्वभावता चोत्पाद्यत इत्यवश्यमभ्युपगन्तव्यमन्यथा कपालोत्पत्त्यसम्भवात् । ततश्च भवता भद्रमुखेन सहेतुकं विनाशमभ्युपगच्छता विकल्पः परित्यक्तः । यदि विकल्पो ऽङ्गीक्रियते विसदृशसन्तानस्त्यक्तव्य इति सिद्धहानिर्दृष्टस्य विरोधश्च । तत्र यथा तव सदृशसन्तानजननस्वभावाविनाशो मुद्गरेण क्रियते तथा ममापि घटविनाश एव क्रियत इति स्थितः सहेतुको विनाशः प्रत्यभिज्ञानाच्च । कालान्तरावस्थायित्वज्वालादिष्वपि सामान्यां समाश्रित्य प्रत्यभिज्ञावृद्धिह्रासदर्शनात् व्यक्तीनामनित्यतैव । यदवस्थायिता व्यक्तिः स्यात् । गृहदाहादिष्वपि सामान्यां समाश्रित्य प्रत्यभिज्ञावृद्धिप्रसङ्ग इत्यव्यभिचारः प्रत्यभिज्ञायाः । न हि क्षणिकत्वं प्रत्यक्षमनुभूयते । प्रथमोत्पन्ननिर्विकल्पज्ञाने विशेषाप-

रामर्शात् । यश्चोक्तं क्रमयौगपद्याभ्यामर्थक्रियाविरोधः समानो यो ऽसावन्त्यो व्रीहिक्षणो यस्मादङ्कुरोत्पत्तिरिष्यते साप्यङ्कुरजननस्वभावो न भवति व्रीहिक्षणत्वादनन्तरातीतव्रीहिक्षणो यस्मादसमानसन्ततावकस्माद्विलक्षणक्षणान्तरोत्पत्तिसम्भवोऽथ सहकारिवशादुत्पाद इति चेन्ममापि तदविशिष्टमिति । किञ्च विनाशोत्पादौ भावव्यतिरिक्तौ अथाव्यतिरिक्तौ इति । व्यतिरिक्तत्वे भावस्य क्षणत्रयप्रसङ्गत्वात्त्रिक्षणः स्थितिक्षणो नाश इत्यव्यतिरिक्तत्वे तूत्पादविनाशयोरभावो नित्यः स्यात् । किञ्च विनाशो नामाभावः स च भावस्य च पूर्वभावी किं वा सहभावी किं वा पश्चादिति । यदि तावत्पूर्वभावी भावोत्पत्तिर्न स्यात् । तद्सहभावित्वे ऽप्यविरोधात् भावस्य शाश्वतत्वप्रसङ्गः । पश्चाद्भावित्वे च सहेतुको ऽपि विनाशः प्राप्नोति दूषणम् । दिङ्मात्रं दर्शितं ग्रन्थगौरवभयादित्युपरम्यते ॥ २० ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

असति हेतौ यदि कार्योत्पादोऽनुज्ञायेत प्रतिज्ञाहानिः स्यात् चतुर्भ्यः कारणेभ्यः कार्योत्पत्तिरितीयं प्रतिज्ञा हीयते । यदि विज्ञानोत्पत्तौ कारणचतुष्टयमधिपतिप्रत्ययः सहकारिप्रत्ययः समनन्तरप्रत्ययः आलम्बन प्रत्ययश्चेति चक्षुरादीन्द्रियमाधिपतिप्रत्यय उच्यते । प्रकाशः सहकारिप्रत्ययो मनस्कारः समनन्तरप्रत्ययो घटादिरालम्बनप्रत्यय इति । अथ हेतौसत्येव कार्यं जायते यौगपद्यमन्यथा कार्योत्पत्तिकालं यावत्कारणस्यावस्थानात् क्षणवादहानिर्न हि विनष्टस्य हेतुः पुत्रोत्पत्तौ सामार्थ्यं दृष्टमन्यथेति हेत्वभ्युपगम इत्यर्थः ॥ २१ ॥

प्रतिसंख्याप्रतिसंख्याविरोधाप्राप्तिरसम्भवः(१) ॥ २२ ॥

भावहेतुको विनाशः प्रतिसंख्यानिरोध इत्युच्यते । सूक्ष्मः स्वाभाविको ऽनिमित्तको विनाशो ऽप्रतिसंख्यानिरोधः । तयोरप्राप्तिरसम्भवः कस्मादविच्छेदो हि सन्तानगोचरो वा स्यात्सन्तानि गो-

(१) प्रतिसंख्येति सूत्रानन्तरम् "उभयथा च दोषात् ॥ २३ ॥" इत्यधिकं सूत्रं शङ्करभाष्ये वर्तते ।

चरो वा । न तावत्सन्तानस्य विच्छेदस्तस्यावस्तुत्वाभ्युपगमान्नित्यत्वाभ्युपगमाच्च । न च सन्तानिविषयौ तौ सन्तानिनां घटादीनां प्रत्यभिज्ञानान्न सूक्ष्मो न स्थूलो विनाशस्त्वत्पक्षे विनाशस्य भावाव्यतिरेकान्न हेतुना विनाशः क्रियते । यस्य तु व्यतिरिक्तो विनाशस्तस्य सहेतुको विनाशः कथमुच्यते सूत्रचतुष्टयाभ्यासात् मुक्तिः। समुदायसत्यं निरोधसत्यं दुःखसत्यं मार्गसत्यञ्चेति । सर्वमुत्पत्तिसदस्तीति यन्निर्णयज्ञानं तत्समुदायसत्यमुच्यते । सर्वं क्षणिकमिति निरोधसत्यम । दुःखसत्यं सर्वं शून्यम् । सर्वं निरात्मकमिति मार्गसत्यं इत्येवं भावयतो रागादिनिवृत्तावभ्युपगम्यमानायां निर्हेतुको विनाश इतीयं प्रतिज्ञा हीयेत । तस्मादसङ्गतं सौगतं मतम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

आवरणाभावमात्रमाकाश इति यत् प्रतिज्ञातं तत्रोच्यते । नाकाशे अभावप्रतिज्ञायुक्ता धादिभिरविशेषादागमात्तावदस्तित्वमात्मन आकाशः संभूत इति । बुद्धेनाप्याकाशस्यास्तित्वमभ्यनुज्ञातम् । तथा चाह ।

आकाशस्य स्थितिर्यावद्यावच्च जगतः स्थितिः ।
तावन्मम स्थितिर्भूयाज्जगद्दुःखानि निघ्नत इति ॥

कृपापरेण बुद्धेनोक्तमिदं किल चक्षुषा विस्पष्टमाकाशं गृह्यते । न च रूपस्य रूपमास्ति । अथ च त्वत्पक्षे रूपरूपिद्रव्यसमवायित्वं च नभसोऽप्यस्ति तेजोवन्तैर्महाभूतै रोहिणशुक्लकृष्णवर्णैः त्रैलोक्यव्यापिभिः स्वस्याभिसम्बन्धाच्च ये पुनरनुमेयमाकाशमिच्छन्ति शब्देन गुणेनाकाशोऽनुमीयते इति वदन्ति तेषां तन्न सिध्यति शब्दस्याकाशेन सह सम्बन्धग्रहणादसत्यपि शब्दे नभसि तदुत्पत्तेः । श्रूयमाणे ऽपि शब्दे तद्द्वारेणाकाशे बुद्ध्यनुत्पत्तेः ॥२४॥

## अनुस्मृतेश्च ॥ २५ ॥

इतश्चाप्ययुक्तं सौगतं मतं क्षणिकवादिनो ऽनुस्मृतिर्नोपपद्यते तदभावात् सर्वव्यवहारलोपः प्रसज्यते । अनुभूते वस्तुनि चोत्पद्यमानं विज्ञानमनुस्मृतिप्रत्यभिज्ञानप्रत्ययोऽहमिदमदर्शमिति यः पूर्वेद्युरनु-

भूयवान् सो ऽहमिदानीमनुभवामीति सर्वलोको ऽहमस्मीति प्रत्यभिजानाति नाहं नास्तीति कश्चिदवैत्या जन्मन आ मरणादेतस्मिन्नन्तराले सो ऽहमस्मीत्यनुसन्दधानः कथमिव बोद्धा नापत्रपते विद्वत्संसदि ब्रुवन् य एवात्मा नास्तीति निराकरोति स एवासि त्वमात्मा निराकरणस्य प्रमाता न ह्यात्मानमात्मा निराकरोति । आत्मव्यतिरिक्ते हि पदार्थे भावाभावप्रत्ययौ भवतः । नात्मन्यभावप्रत्यय आत्मानं लभते न चान्य दृष्टे वस्तुन्यन्यस्मिन् स्मृतिरुपपद्यते । ततश्च दर्शनस्मरणयोरेकः कर्त्ता न हि देवदत्तेन दृष्टे यज्ञदत्तस्य स्मृतिरुत्पद्यते । न चैकसन्तानत्वे सतीति विशेषणं सम्भवति सन्तानिव्यतिरिक्तस्य सन्तानस्यानभ्युपगमे च स एवात्मा स्यान्नास्ति विवादः । तस्मात्त्वत्पक्षे सन्तानिनो विज्ञानक्षणाः परस्परभिन्ना एव सन्ति तत्प्रातर्दृष्टे वस्तुनि मध्याह्ने स्मृतिर्नोपपद्यते । तत्र द्रष्टुः स्मर्तुश्च कार्यकारणभावान्न च विज्ञानसन्तानपरलोकगमनं सम्भवति । अन्तराभवेदहकल्पनायाः प्रमाणाभावादन्तरभवदेहमनुप्रविश्य विज्ञानसन्तानः परलोकं गच्छतीति मन्यते । न च मरणवेलायां मण्डूकवदुत्प्लुत्यविज्ञानक्षणः प्रविशत्यमूर्त्तत्वान्न चान्यः प्रेरको ऽस्ति । कर्मप्रेरकमिति चेत्तदसिद्धं, तादृशस्य कर्मणः प्रमाणाभावात् । सुगतेन सर्वज्ञेनोक्तमिति चेत्तस्य सर्वज्ञत्वमसिद्धमिति प्रथमपादे स्थितम् । ततश्च स्वर्गनरकगमनाभावात् तत आगत्य गर्भप्रवेशासिद्धेरुत्पत्तिभावानुपपत्तिः । आत्मवादे विस्तरेणात्मस्थापनं कृतमित्यत उपरम्यते ॥ २५ ॥

## नासतो ऽदृष्टत्वात ॥ २६ ॥

यच्चाभ्युपगतं सौगतैरभावाद्भावोत्पत्तिरिति । तदयुक्तमसतः शशविषाणादेरङ्कुरोत्पत्त्यदर्शनात् । भावस्य निरूपाख्यत्वाच्छशविषाणजीवभावयोः को विशेषस्ततश्च कारकनियमानुपपत्तिरिति सर्वं सर्वस्मादुपपद्यते । ननु च बीजमनुपमृज्याङ्कुरप्रादुर्भावो न दृश्यते । सत्यं बीजसंस्थानं तत्र निवर्तते विरोधिद्रव्यं बीजमेव चाङ्कुराकारेणावस्थान्तरतया परिणमत इति प्रत्यक्षमेतन्न प्रत्याख्यातुं शक्यम् ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

यदि चाभावाद्भावोत्पत्तिरुदासीनानामप्रयतमानानामप्यभिलषितार्थसिद्धिरभावस्य सुलभत्वादिति ॥ २७ ॥

## नाभाव उपलब्धेः ॥ २८ ॥

सौत्रान्तिकमते निराकृते योगाचारो विज्ञानवादी बौद्धः प्रत्यवतिष्ठते । शमथविपश्यनायुगनद्धवाही मार्गो योग इति योगलक्षणम् । शमथेति समाधिरुच्यते । विपश्यना सम्यग्दर्शनलक्षणो यथा युगनद्धौ बलीवर्दौ वहतस्तथा यो मार्गः सम्यग्दर्शनवाही स योगस्तेनाचरतीति योगचार उच्यते । किं पुनः सम्यग्दर्शनम् सर्वं बाह्यार्थशून्यं विज्ञानं सर्वं क्षणिकं सर्वं निरात्मकमिति । कथं पुनर्विज्ञानमात्रं प्रतिज्ञायते साकारं प्रत्ययं च विज्ञानं नीलं पीतमिति हि साकारं विज्ञानमेव प्रकाशते प्रत्यक्षं च । ततः प्रदीपवत् प्रकाशकत्वादप्रत्यक्षस्योपलम्भः तस्य स्वपरोत्पन्नयोर्विज्ञानयोरविशेषप्रसङ्गः । अस्ति च विशेषः स्वोत्पन्नेन विज्ञानेन प्रवृत्तिनिवृत्तिलक्षणं व्यवहारं पुरुषो निवर्तयति । तथाचोक्तं विप्रभिक्षुणा ।

अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति ।
अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यत इति ॥

तत्र ग्राह्याकारः प्रमेयं ग्राहकाकारः प्रमाणं स्वसंवित्तिः फलमिति त्रयमेकस्मिन्विज्ञाने ऽवकल्पते । तस्मान्नास्ति वाह्यार्थः । इतश्च सहोपलम्भनियमान्न भेदो नीलतद्धियोर्यदैव नीलज्ञानं तदैव नीलमुपलभ्यते तस्मादनयोरभेद इति । ततश्च स्वार्थशून्यो जायते प्रत्ययत्वात्स्वप्नप्रत्ययवत् । अत्र वदामो न बाह्यस्याभावः कस्मादुपलब्धेः । स हि बहिर्देशसम्बन्धः प्रत्यक्षमुपलभ्यते पावकः पर्वतः पृथिवी सलिलमित्याकारवन्निराकारं च विज्ञानमन्तर्देशे ऽहङ्कारसमारूढं विज्ञानमात्मा परोक्षमुत्पद्यते । तयोर्ज्ञानज्ञेययोर्भिन्नदेशयोरनुभूयमानयोः कथमेवैकत्वमाश्रीयते । क्षीरोदकयोस्तु परस्परसंसर्गात् स्यादेकत्वाभिमानः प्रत्यक्षं यद्वर्णविज्ञानस्यास्माकमप्यभीष्टमेव च न पुनः पूर्वमेव विज्ञानं प्रत्यक्षमनुभूयते । ग्राह्याकारो-

पश्लेषाकारपूर्वमन्तरेण ग्राह्याकारपुरःसरमेव हि संवेदयितुरपरोक्षीभवति। घटसंवेदनं पटसंवेदनमिति हि वेद्याकारपूर्वकमेव संवेदनं निर्दिश्यते। यदुक्तं सहोपलम्भनियमादिति तदनिरूपिताभिधानम्। सहत्वं नामैकदेशवर्त्तित्वमेककालवर्त्तित्वं वा द्वयोर्भिन्नयोः पदार्थयोस्ततश्च भिन्नोपलम्भनियमादिति हेत्वर्थो भेद इति च प्रतिज्ञा। सोऽयं प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञायां सत्यां हेतुर्बाध्यते तस्मिन्प्रतिज्ञा बाध्यते इति। न च दृष्टान्तोऽस्ति ग्राह्यग्राहकयोरभेदे द्विचन्द्रज्ञानादिष्वपि ग्राह्यग्राहकयोर्भेद एवेष्टो मीमांसकैः ॥२८॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

यदुक्तं स्वप्नवदिति तत्रोच्यते। स्वप्नमृगतृष्णादिवद्भवितुं जाग्रत्पक्षो नार्हति वैधर्म्यात्। तत्र हि निद्रा कारणदोषो गृह्यते प्रबुद्धस्य बाध्यते। न च प्रत्ययत्वात्स्वप्नप्रत्ययवदस्य मिथ्यात्वम्। यदि च प्रत्ययत्वं मिथ्यात्वहेतुरभिप्रेयेत। स्वप्नज्ञानस्य मिथ्यात्वमसिद्धं प्रबोधप्रत्ययस्य बाधकस्यापि मिथ्यात्वाच्च दृष्टान्तभावः। तस्माज्जाग्रत्प्रत्ययस्य मिथ्यात्वमनुमानेन साधयितुमशक्यं प्रत्यक्षानुभवबलीयस्त्वात्। ये तु बौद्धमतावलम्बिनो मायावादिनस्ते ऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः। यदि बाह्योऽर्थो नाभिप्रेतः स्यात् किमर्थमिदं यतते सूत्रकारः। अथ मन्यसे ऽन्यस्मिन्स्थायिनि वस्त्वन्तरे ऽसति विज्ञानमात्रं नेष्यते इति पुनरात्मतत्त्वे प्रपञ्चापलाप इति। को ऽयं न्यायो यत्सत्यस्मिन्प्रतिपन्ने ऽन्यन्नेष्यत इति। प्रत्युत ब्रह्मकार्यत्वात् पृथिव्यादीनां तथात्वमेव युक्तम्। यत्तु प्रत्यक्षादीनां स्वतो मिथ्यात्वं नास्ति परतस्तु मिथ्यात्वमिति किं विशिष्योच्यते। ननु सर्वत्र स्वप्नादावपि परत एव मिथ्यात्वं गम्यते न स्वतो न हि रजतज्ञाने तद्गतमिथ्यात्वं गृह्यते। तत्र चागमस्याबाधस्य प्रत्यक्षादीनां सर्वदा मिथ्यात्वमेव स्यात् न कदाचित्तथात्वमिति ॥ २९ ॥

प्रथमपादे प्रत्यक्षादिप्रामाण्यनिरूपणं चोदनाप्रामाण्यसिद्ध्यर्थं यत्तदुदके विशीर्णं स्यादुपवर्षाचार्यस्य शास्त्रसम्प्रदायप्रवर्त्तकस्यानुवैचित्र्यं कृतमेवं विज्ञानवैचित्र्यं न स्वतो निराकारत्वाज्ञानुवासनानिबन्धनं स्यादित्याशङ्कां निराकरोति।

## न भावो ऽनुपलब्धेः ॥ ३० ॥ (१)

वासनानां न भावो ऽनुपलब्धेः प्रमाणाभावादित्यर्थः । यत्किलालयविज्ञानमहंप्रत्ययाख्यं तद्घटादिज्ञानैर्वासनाः आधीयन्ते ताश्च घटादिज्ञानानीति परस्परहेतुमद्भावेन विज्ञानवासनाचक्रं प्रवर्तत इति । तदयुक्तम् । विज्ञानस्कन्धमात्रवादिनः कुतो व्यतिरिक्ता वासनास्तदभ्युपगमे विज्ञानवादहानिरालयज्ञानस्य च क्षणिकत्वात् आधारत्वं नोपपद्यते । किञ्चानुभवजनितः संस्कारस्मृतिहेतुर्वासनोच्यते न पुनर्ज्ञेयाकारवैचित्र्ये तस्याः सामर्थ्यं कल्पयितुं शक्यम् । सर्वथा यथा विचार्य्यते तथा सिकताकूलवदवदीर्य्यते इत्यन्तमुपेक्षणीयं सौगतमतदर्शनम् । विज्ञानवादिनिराकरणेन शून्यवादो निरस्तो वेदितव्यस्तास्मिन्स्थिते तत्प्रवृत्तेः ॥ ३० ॥

## नैकस्मिन्नसम्भवात् ॥ ३३ ॥

इदानीमार्हतं मतं परीक्ष्यते । सप्त चैषां पदार्थाः शास्त्रसङ्ग्रहभूताः जीवाजीवास्रवसम्बरनिर्जरबन्धमोक्षा इति। तेषामपरः प्रपञ्चः पञ्चास्तिकायो नाम जीवास्तिकायः पुद्गलास्तिकायो धर्मास्तिकायो ऽधर्मास्तिकाय आकाशास्तिकायश्चेति । इमं च सप्तभङ्गीनयं नाम न्यायं सर्वत्रावतारयन्ति । स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यश्च स्यादस्ति च नास्ति चावक्तव्यश्चेति । तत्र जीवाजीवौ प्रसिद्धावाश्रावयति पुरुषं विषयेष्विन्द्रियवृत्तिभिरिति आश्रव उच्यते । अन्ये त्वार्हता व्याचक्षते कर्तारमभिव्याप्याश्रवत्यनुगच्छतीत्याश्रवं कर्मोच्यत इति । सम्बरः सम्बन्धः । निर्जरस्तपः पूर्वसञ्चितं कल्मषं निर्जरयतीति। अञ्चानमौनी वीरासने तिष्ठति भोजनतप्तशिलारोहणकेशोल्लुञ्चनादिलक्षणम्। अष्टविधो बन्धः । दर्शनावरणीयं ज्ञानावरणीयं मोहनीयमन्तरीयमिति चत्वार्य्येतानि घातिकर्माण्युच्यन्ते । वेदनीयं नामिकं गोत्रिकमायुष्कमिति चत्वार्य्यघातिकर्माणि । बन्धनिवृत्तौ नित्यसिद्धा-

---

(१) नाभाव इति सूत्रानन्तरं "क्षणिकत्वात् ॥ ३१ ॥ सर्वथानुपपत्तेश्च ॥ ३२ ॥" इति सूत्रद्वयमधिकं शाङ्करभाष्ये दृश्यते ।

र्हदनुग्रहान्मोक्षो भवतीति । पुद्गलास्तिकाय इति परमाणवो ऽभिधीयन्ते। धर्मास्तिकायः प्रवृत्त्युनुमेयो ऽधर्मास्तिकायः स्थितिहेतुरमुक्तानाम् । आकाशास्तिकायो द्विधा भिद्यते लोकाकाशो ऽलोकाकाशश्चेति। उपर्य्युपरिस्थितानां लोकानामन्तर्वर्ती लोकाकाशस्तेषामुपरिमोक्षस्थानमलोकाकाशस्तु परतो यत्र लोका न सन्ति। जीवास्तु त्रेधा भिद्यन्ते बद्धात्मानो मुक्तात्मानो नित्यसिद्धाश्चेति । ये मुक्तात्मानस्ते सर्वज्ञा निरतिशयसुखाश्चासत इति। तत्रेदमुच्यते नैकस्मिन्धर्मिण्यसम्भवात् ! कथमेको भावो ऽस्ति च नास्ति च स्याद्यदास्तीत्यवधार्यते विरोधात्। ननु पटरूपेण घटो नास्ति स्वेन रूपेणास्ती ति को विरोधः। उच्यते स्वरूपे ऽपि सप्तभङ्गीनयस्याविशेषात् । स्वरूपमस्तीत्यपि स्यान्नास्तीत्यपि तत्रानध्यवसानमेव स्यात्। किञ्च ये सप्त पदार्थास्ते तथैवान्यथा वा। ननु सर्वमनैकान्तिकमित्यवधारणं ज्ञानं निश्चितमेव नेत्युच्यते । अवधारणमप्यनैकान्तिकमेव स्यात्। अवधारणं स्यात् नास्ति चावधारणनमिति क्वचिन्निश्चयः स्यान्मोक्षो ऽस्ति नास्तीत्यवधारणादप्रवृत्तिरेव स्यात्तत्रैवं शास्त्रं प्रणयन्नुन्मत्ततुल्यस्तीर्थंकरः स्यात्॥३३॥

## एवञ्चात्माकार्त्स्न्यम् ॥ ३४ ॥

एवञ्चात्मनो ऽपि यदिष्टं शरीरपरिणामत्वं तदपि पक्षे स्यात् पक्षे नेत्यकार्त्स्न्यं अपरिपूर्णत्वं तत्र शरीरैकदेशे जीव इत्येकदेशो जीवशून्यः स्यात्। किञ्च मनुष्यशरीरपरिमाणो जीवः केन चित्कर्मविपाकेन पिपीलिकाशरीरं प्रविशन्न समीयते॥ ३४ ॥

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

मनुष्यशरीरपरिमाणस्य जीवस्य हस्तिशरीरादावकार्त्स्न्यं परिहर्तुं शक्यं कथमनन्तावयव आत्मा हस्तिशरीरे तेषामवयवानामुपचयो ऽर्भकशरीरे ऽपचय इत्येवम्। पर्यायादविरोध इति चेन्न । विकारमूर्त्तत्वादिदोषप्रसङ्गात् । यदि सावयवो जीवः स्यात् देहवद्विनाशी स्यात् मूर्त्तत्वात् न चोपचयापचयौ शक्यौ कल्पयितुं प्रमाणाभावात् ।

ये ऽपगतास्ते ऽपगता एव न तेषां पुनरात्मसम्बन्धो निरूपयितुं शक्यत इत्यसङ्गतमार्हतं मतम् ॥ ३५ ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

चरमदेहे गतस्य परिमाणस्यावस्थितिरिष्यते दिगम्बरैर्भिन्नदेहे मुक्तः सर्वगतो ऽहं देहान्तरावच्छेदाभावात् तन्नित्यं परिमाणं ततश्चाद्यमध्ययोरप्यवस्थयोर्नित्यत्वं स्यादतो विशेषः सर्वदाणुर्वा सर्वगतो वा न शरीरपरिमाणत्वमनवस्थितमाश्रयितुं शक्यमेवं चोपचयापचयप्रतिज्ञाहानिरतो दिगम्बरसिद्धान्तो विवसनसमयो ऽप्यत्यन्तमनादरणीय इति ॥ ३६ ॥

पत्युरसामञ्जस्यात् ॥ ३७ ॥(१)

अधुना निमित्तकारणमीश्वरो निराक्रियते । तत्र माहेश्वराश्चत्वारः पाशुपताः शैवाः कापालिकाः काठकासिद्धान्तिनश्चेति । पशुपतिनेश्वरेण प्रणीतं पञ्चाध्यायिशास्त्रं पञ्च च तत्र पदार्था व्याख्यायन्ते कारणं कार्यं योगो विधिर्दुःखान्त इति । कारणमीश्वरः कार्यं शब्दवाच्यं प्रधानं महदादि च । कार्ययोगो ऽप्योङ्कारमभिधायात्क्रादिति कुर्यात् धारणमित्येवमुक्तो विधिः पदार्थः त्रिषवणस्नानादिगूढचर्योवसानो दुःखान्तो मोक्ष इति पाशुपतवैशेषिकनैयायिककापालिकानामविशिष्टाः मुक्त्यवस्थायां पाषाणकल्पा आत्मानो भवन्तीति । सांख्यशैवयोश्च विशिष्टा आत्मानश्चैतन्यस्वभावास्तिष्ठन्तीति । तत्रेदमुच्यते पत्युरीश्वरस्य कल्पना अनुपपन्ना असामञ्जस्यात् । किमिदमसामञ्जस्यं वैषम्यनैर्घृण्यप्रसङ्गात् मध्यमोत्तमनीचं जगद्विम्बं प्रवर्तयतः । न च प्राणिकर्मापेक्षत्वादनवद्यम । नेत्युच्यते । न तत्र प्रमाणमस्ति तदपेक्षया करोति तन्निरपेक्षो वा स्वतन्त्र इति किञ्चिदत्र प्रमाणं क्रमते ॥ ३७ ॥

अधिष्ठानानुपपत्तेश्च ॥ ३८ ॥

इतश्चासामञ्जस्यमशरीरस्येश्वरस्य प्रधानाधिष्ठानानुपपत्तेः ।

(१) पत्युरिति सूत्रानन्तरं सम्बन्धानुपपत्तेश्च ॥३८॥ इत्यधिकं सूत्रं शाङ्करभाष्ये दृश्यते ।

सशरीरो हि कुलालादि मृदादीनामधिष्ठाता दृष्टः ॥ ३८ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ३९ ॥

यथात्मेन्द्रियग्राममधितिष्ठति तथेश्वर इति चेन्नैतदेवं युक्तमात्मनो ऽधिष्ठातृत्वं विषययोगार्थत्वात् । स्वकर्मार्जितत्वाद्रागादिमत्त्वाच्चेत्यादिग्रहणमीश्वरस्य तु सर्वं विपरीतम् ॥ ३९ ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४० ॥

वाशब्दो विकल्पार्थः । किं प्रधानपुरुषाणामियत्ता तेन परिच्छिद्यते वा नेति । यदि परिच्छिद्यते तेषामन्तवत्त्वं यद्यत्परिच्छिन्नं घटादि तत्तदन्तवत् दृष्टम् । अथ परिच्छिद्यते तस्येश्वरस्यासर्वज्ञता ऽनुमानप्रधानस्यैतत् दूषणमागमवादिनस्तु ब्रह्मोपादानकारणं च सर्वज्ञं सर्वशक्ति तदङ्गास्तु जीवा अनन्ता इति निरवद्यम् ॥ ४० ॥

उत्पत्त्यसम्भवात् ॥ ४१ ॥

इदानीं पञ्चरात्रसिद्धान्तः परीक्ष्यते । ननु चेयमनुपपन्ना चित्रा श्रुतिर्विरोधाभावात् । कथम् । वासुदेव एवोपादानकारणं जगतो निमित्तकारणं चेति ते मन्यन्ते । क्रियायोगश्च तत्प्राप्त्युपायस्तत्रोपादिश्यते अधिगमनोपादानेज्यास्वाध्याययोगैर्भगवन्तं वासुदेवमाराध्य तमेव प्रतिपद्यत इति । तदेतत् सर्वं श्रुतिप्रसिद्धमेव तस्मान्नात्र निराकरणीयं पश्यामः । अभिधीयते यदत्र देवार्चनध्यानसमाधिलक्षणं कर्मज्ञानं चोपदिश्यते तत्सर्वं प्रमाणीक्रियते । अवान्तरं तु तत्रान्तरे विरुद्धं किञ्चिल्लक्ष्यते तन्निरस्यते । तत्र वासुदेवः परा प्रकृतिः परमात्मा ततः सङ्कर्षणो नाम जीवो जायते सङ्कर्षणात्प्रद्युम्नः सृज्यमानो जायते ततो ऽनिरुद्धो नामाहङ्कारो जायत इति भागवतामन्यन्ते । तत्रेदमुच्यते वासुदेवात्परमात्मनो जीवस्योत्पत्त्यसम्भवात् । कथमसम्भवो नित्यत्वादिदोषप्रसङ्गात्स्वर्गनरकापवर्गभागिनो भावाद्वेदप्रामाण्यं लुप्यंत लोकव्यवहारश्च न सिध्यति । तस्मादनुपपन्नेयं कल्पना ॥ ४१ ॥

न च कर्तुः करणम् ॥ ४३ ॥

इतश्चानुपपन्नं कर्तुः सङ्कर्षणाज्जीवादन्तःकरणं प्रद्युम्नसंज्ञं मनो जायते। न हि देवदत्तात्परशुरुत्पद्यते ॥ ४३ ॥

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

पराभिप्रायविकल्पार्थो वा शब्दः। सर्व एते आत्मानो भगवन्तो वासुदेवा एव निरधिष्ठाना निरवद्याश्च विज्ञानैश्वर्य्य-शक्तिबलवीर्यतेजोभिरीश्वरगुणैरन्विता इति। तत्रोत्तरं विज्ञाना-दिभावे ऽपि तदप्रतिषेधः उत्पत्त्यसम्भवाद्दोषः स्याप्रतिषेधः स्यादे-वासौ दोषः इति। यदि चत्वारोप्येते सदृशास्तदातिशयाभावादु-त्पत्त्यसम्भवो ऽथासदृशास्तथाप्यसम्भवः। प्रतिपादितप्रतिषेधा-च्च प्रद्युम्नाख्यं मनो ऽहङ्कारश्चानिरुद्ध इति करणत्वमहङ्कारत्वं चाभिधाय सर्व एते आत्मान इति आत्मत्वप्रतिज्ञानं विप्रतिषिद्धम्। श्रुतिविप्रतिषेधश्च। चतुर्षु श्रेयो द्वारमलब्ध्वेदं शास्त्रं शाण्डिल्य-श्चकारेति ॥ ४४ ॥

इति भास्करीयब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य
द्वितीयः पादः समाप्तः।

# अथ द्वितीयाध्यायस्य
# तृतीयः पादः

न वियदश्रुतेः ॥ १ ॥

यदि विप्रतिषेधात् परदर्शनानामुपेक्षा सा तुल्या वैदिकस्यापि दर्शनस्य। अत्रापि श्रुतीनां विप्रतिषेधदर्शनादिति तत्परिहारद्वारेण महाभूतानामिन्द्रियाणां मुख्यप्राणस्य च जीवपरिकरबद्धानां समस्तभेदव्यवहारहेतूनामधुना सतत्त्वं विचार्यते। वियदाकाशं नोत्पद्यते। कस्मादश्रवणात्। सदेव सोम्येदमग्र आसीदित्युपक्रम्य त्रयाणां तेजोबन्नानां सृष्टिरुक्ता नाकाशस्येति ॥ १ ॥

अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे । अस्त्युत्पत्तिश्रुतिराकाशस्यतैत्तिरीयके तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यत्र। कश्चिदाह उत्पत्त्यनुत्पत्तिश्रुत्योरेवं सति विरोधस्तत्र चावश्यमेका श्रुतिर्गौणी कल्पनीयोभयोः प्रामाण्यात्तुल्यत्वादिति ॥ २ ॥

गौण्यसम्भवात् ॥ ३ ॥

अत्र पूर्वपक्षवादी वैशेषिकमतमनुसृत्याकाशोत्पत्तिवादिनी श्रुतिर्गौणीति प्रतिजानीते । कस्मादसम्भवात् । समानजातीयैरनेकैर्द्रव्यैः परमाणुसंज्ञैरेकं द्रव्यमारभ्यते भूम्यादि न च निरवयवस्याकाशस्यानेकद्रव्यमारम्भकमवयवभूतं सम्भवतीति ॥ ३ ॥

शब्दाच्च ॥ ४ ॥

इतश्च वायुश्चान्तरिक्षं चैतदमृतमिति सामर्थ्यादजत्वम् ॥ ४ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

चशब्दः सम्भावनायाम् । एकस्यापि सम्भूतशब्दस्याकाशे गौणत्वमुत्तरत्र मुख्यत्वं स्याद्यथा ब्रह्मशब्दस्य तपसा ब्रह्मजिज्ञासस्व तपो ब्रह्मेति तपसि गौणः परमात्मनि मुख्य इति प्राप्ते ऽभिधीयते ॥ ५ ॥

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्यस्याः प्रतिज्ञाया एवमपरित्यागः स्याद्व्यतिरेकादाकाशस्य विज्ञेयेन ब्रह्मणा शब्देभ्यश्च समस्तस्य वस्तुनो ऽव्यतिरेकः सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमेतदात्म्यमिदं सर्वमित्याप्रपाठकपरिसमाप्तेः ॥ ६ ॥

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

उत्पत्त्यसम्भवशङ्कानिवृत्त्यर्थस्तुशब्दः सम्भूतश्रुतेरेव । न च सकृदुच्चारणे गौणत्वमुख्यत्वसम्भवो दृष्टान्ते तूच्चारणभेदादुत्पद्यते । न च निरवयवस्योत्पत्तिर्न सम्भवति बुद्धिकर्मवदुपपत्तेः । प्रत्यनुमानं च क्रियते यावत् किञ्चिद्विकारजातं दृश्यते घटशरावादि तावद्विभागो लोके लक्ष्यते । विभागः पृथक्त्वम् । तदनेनानुमानमुपन्यस्तमाकाशं कार्यमचेतनत्वे सति विभक्तत्वात् पृथिव्यादिवदिति सविशेषणोहेतुरुपादीयते । अन्यथा आत्मनो ऽपि कार्यत्वं प्रसज्येत ॥ ७ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

एतेन वियदुत्पत्तिन्यायेन मातरिश्वा वायुर्व्याख्यातो वेदितव्यः । सैषा अनस्तमिता देवता यद्वायुरिति स्यान्नित्यत्वबुद्धिः कस्यचित्तन्निवृत्त्यर्थमतिदेशसूत्रमादित्यादीनामस्तमयापेक्षया वायोर्विशेषकथनमेतदनस्तमितेति ॥ ८ ॥

## असम्भवस्तु सतो ऽनुपपत्तेः ॥ ९ ॥

शब्दस्पर्शादीनां गुणानां उपचितापचितानां दिक्कालसंख्याप-

रिमाणादीनां चोत्पत्त्यश्रवणान्नित्यत्वमिति प्राप्ते उच्यते । असम्भवस्तु । नित्याशङ्कानिवृत्त्यर्थस्तुशब्दः । सतो विद्यमानस्य गुणस्यान्यस्य वानित्यत्वासम्भवः । कस्मादद्वितीयश्रुत्यनुपपत्तेः । न च गुणादीनां पृथगुत्पत्तिर्वक्तव्या द्रव्योत्पत्तौ चोत्पत्तिसिद्धेस्तदनन्यत्वाद्यथा यवो जात इति यवगुणानामपि जन्मोक्तं भवति । काले ऽप्यादित्यादीनां गतिविशेषो ऽस्तमयोदयलक्षितो भागो दिगुच्यते । ये पुनः सतो ब्रह्मणः उत्पत्तिमाशङ्कानिराकरणार्थं सूत्रं वर्णयन्ति तेषां निरर्थकं सूत्रमाशङ्क्य हेत्वभावात्सकारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप इतिमन्त्रवर्णात् । न हि वचनमदृष्ट्वा पूर्वपक्षः क्वचित्क्रियते । अनवस्थानात् ॥ ९ ॥

तेजो ऽतस्तथाह्याह ॥ १० ॥

तेजो ऽतो मातरिश्वनो जायते । कुतस्तथाह्याह । यथाकाशान्मातरिश्वा तथा वायोरग्निरिति । ननु तत्तेजो ऽसृजतेति सतो जन्म श्रूयते न वायोः । नायं विरोधस्तेन तेनविकारात्मना स्थित्वा ब्रह्मैव सृजति तदनन्यत्वाद्विकाराणाम् ॥ १० ॥

आपः ॥ ११ ॥

अतस्तथा ह्याहेत्यनुवर्तते । अतस्तेजस आपो जायन्ते ऽग्नेराप इत्यन्तरिता आपो मा भूवन्निति सूत्रं प्रणेयम् । नात्र मदविषयो न्यायो ऽप्यस्ति ॥ ११ ॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

ता अन्नमसृजन्तेत्यत्रार्थं व्रीहियवादि स्यात् वाक्यशेषात्तस्माद्यत्र क्व च वर्षन्तितदेव भूयिष्ठमन्नं भवतीति प्राप्त उच्यते । पृथिव्येवान्नशब्दवाच्या । कस्मादधिकारान्महाभुतसृष्ट्यधिकारात् । तथा रूपात् । यत्कृष्णं तदन्नस्येति । तथैव शब्दान्तरात् । श्रुत्यन्तरादद्भ्यः पृथिवी तद्यदपां रस आसीत्तत्समहन्यत सा पृथिव्यभवदिति च कार्य्योपन्यासवाक्यशेष इत्यविरोधः ॥ १२ ॥

तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

वियदादीनां स्वतन्त्राणां स्वकार्य्योत्पादकत्वं मुख्यार्थत्वादिति प्राप्त ऽभिधीयते । स एव परमेश्वरस्तेन तेनाकाशादिरूपेण स्थित्वा तं तं विकारं सृजतीत्यवगन्तव्यम् । कस्मात्तल्लिङ्गात्तस्य लिङ्गं ज्ञापकं शास्त्रं यः पृथिव्यां यो ऽप्सु तिष्ठन्निति बहुस्यां प्रजायेयेति तदात्मानं स्वयमकुरुतेति च । तदभिध्यानात्तस्येश्वरस्याभिध्याना-त्सङ्कल्पादेव तत्तेज ऐक्षन्तेति उपचर्यते न तेषामालोचनमस्ती-त्यभिप्रायः ॥ १३ ॥

## विपर्ययेण तु क्रमो ऽत उपपद्यते च ॥ १४ ॥

भूतानामुत्पत्तिक्रमो ऽवगतः प्रलयक्रमो निरूप्यते । अनियमो नियमकारिणः शास्त्रस्याभावादिति प्राप्ते उच्यते । उत्पत्तिक्रमाद्विपर्ययेण प्रातिलोम्येन प्रलयक्रमो द्रष्टव्यः । कथमन्नेन सौम्य शूङ्गेनापो मूलमन्विच्छेति श्रुतेः । स्मृतिरपि ।

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयत ॥

इति उपपद्यते चैवं न हि तन्तुषु विनष्टेषु पटस्य कार्यावस्थितिरस्ति ॥ १४ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

सृष्टयप्ययक्रमौ भूतानामद्वैतभावनोपयोगिनौ निरूपिताविदानीमिन्द्रियमनोबुद्धीनां क्रमो भूतक्रमाविरोधेन प्रतिपाद्यते । ब्रह्मणो भूतानां चान्तराले ज्ञानमनसी स्यातां विज्ञानमनसी स्याताम् । विज्ञानशब्देनेन्द्रियं गृह्यते बुद्धिश्च । तदुभयं मनश्च विज्ञानमनसी । तल्लिङ्गात् ।

एतस्माज्जायते प्राणो मनः सर्वेद्रियाणि च ।
बुद्धिं तु सारथिं विद्यादिति चेन्न ।

कस्मादविशेषात् । पुरस्तात्परस्ताच्चोत्पत्तिभूतानुग्रहणेक्षित्वाच्चेन्द्रियाणां क्रमविरोधात्परस्तादेवोत्पत्तिर्युक्ता । दर्शयति च स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथि-

वीन्द्रियं मनो ऽन्नमिति । सादृश्यमात्रपराहीयं श्रुतिरेतस्माज्जायत इति न क्रमपरा । भूतानुग्रहं च दर्शयत्यन्नमयं हि सौम्य मन आपोमयः प्राणस्तेजोमयी वागिति । शरीरप्रदेशो रूपादिग्रहणशक्तियुक्तो बाह्यमिन्द्रियमध्यवसायात्मिका बुद्धिः सङ्कल्पस्मृतिचिन्तादिवृत्तिहेतुर्मन इति विवेकः ॥ १५ ॥

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

जातो देवदत्तो मृत इति व्यपदेशादनित्यत्वं जीवस्येत्याशङ्का तुशब्देनापनीयते । यो ऽयमुत्पत्तिप्रलयव्यपदेशो लौकिकः स भाक्तः गौण इत्यर्थौपयिकया गौण्या वृत्त्या मुख्यावृत्तिः । आमृज्यते भज्यते सा भक्तिः तत्र भवोः भाक्तः । चराचरव्यपाश्रयः । चरं जङ्गमशरीरमचरमुद्गत इति गौणत्वसिद्धिः । कुतस्तद्भावे शरीरभावे जन्ममरणयोर्भावित्वात् । तथाच श्रुतिरयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः स उत्क्रामन्म्रियमाण इति ॥ १६ ॥

## नात्मा ऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

वियदादिवदात्मा जायते नेति चिन्ता । तत्र यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीत्युपक्रम्याह सर्वे एत आत्मानो व्युच्चरन्तीत्यतो जीवो जायत इति प्राप्ते ब्रूमः । नात्मा जायते । कस्मात् अश्रुतेः । न ह्याकाशादिसृष्टिप्रकरणे जीवस्योत्पत्तिश्रुतिरास्ति । नित्यत्वाच्चोत्पत्तिर्विरुध्यते । कथं नित्यत्वम् । प्रत्यभिज्ञानादहमिदमदर्शमिति सर्वो लोकः स्वमात्मानं वेदयते । अन्धकारे स्थापितं वस्तु संस्पृश्योपादत्ते । स्वसंवेद्यो हि सन् परस्मै घटादिवद्दर्शयितुं शक्यस्ताभ्यश्च श्रुतिभ्यो नित्यत्वं जीवस्येति । यद्वाव किलेदं म्रियते न जीवो म्रियते अजो नित्यः शाश्वतो ऽयं पुराणो अविनाशी वा अरे ऽयमात्मानुच्छित्तिधर्मेति । भूयसीनां च श्रुतिनामन्यथाकर्तुमशक्यत्वात्तदविरोधाय विस्फुलिङ्गश्रुतिर्विपरिणेया । न चात्रापि विकारभावो विवक्षितः किन्तूपाधिकृतभेदाभिप्राया हि सा । तेष्वप्यग्निसामान्यानुगमात्पार्थिवद्रव्यविश्लेषवशाद्विच्छेदमात्रं नान्यत्र भेदः सुषुप्तिप्रकरणत्वाच्च सृष्ट्यभिप्रायेणेति स्थितम् ॥ १७ ॥

## ज्ञो ऽत एव ॥ १८ ॥

जीवस्य स्वतश्चैतन्यं नास्त्यागन्तुकमेव तस्य चैतन्यं यदिदं घटादिविषयं विज्ञानमविच्छेदेन वर्तते तदेवास्य चैतन्यमिति काणादा मन्यन्ते । तत्रेदमुच्यते । जीवो ज्ञः । कस्मादत एव श्रुतिभ्य एवात्रायं पुरुषः स्वयं ज्योतिर्न हि विज्ञातेर्विपरिलोपो विद्यते विज्ञान घन एवैतेभ्यो भूतेभ्य इति ब्रह्माङ्गत्वाच्च । विस्फुलिङ्गन्यायेन विज्ञानमानन्दं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेति । स्वाभाविकं चास्य ब्राह्मरूपमौपाधिकमितरत् । किञ्च स्वप्रत्यक्षं चास्य चैतन्यं ज्ञातृस्वरूपस्य सर्वदापरोक्षत्वात् । घटदीनां च कादाचित्कानां पृथगेव गृह्यमाणत्वाद्यथाज्ञेयं ग्राह्यं तथा विज्ञानसन्तानोऽपि ग्राह्य एवात्मान इति स्थितम् ॥ १८ ॥

## कस्मात् उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

इदमिदानीं चिन्त्यते किमणुपरिमाणः किं वा महापरिमाण इति । किं तावत्प्राप्तमणुपरिमाण इति । कस्मादुत्क्रान्तिगत्यागतीनां श्रवणादिन्यध्याहारः । तमुत्क्रामन्तं प्राणो ऽनूत्क्रामति ये के चास्माल्लोकाद्यन्ति चन्द्रमसमेव ते गच्छन्ति यावत् सम्पातमुषित्वातथैतमेवाध्वानं पुनर्निवर्तन्त इति । न च सर्वगतस्यैतत्त्रयमुपपद्यते ॥ १९ ॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

ग्रामस्वाम्यनिवृत्तिवदुत्क्रान्तिः कदाचित्स्यादुत्तरयोस्तु गत्योः स्वात्मना स्वरूपेणैव सम्भवादिति विशेषाभिधानम् ॥ २० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

नायमणुर्जीवः स्यादतत् श्रुतेर्महत्वश्रुतेः स वा एष महानज आत्मेति चेन्न । इतराधिकारात्परमात्माधिकारात् । स्वरूपविवक्षया ऽसौ निर्देशो न जीवपर इत्यर्थः ॥ २१ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

इतश्च स्वशब्दादुन्मानाच्चैषो ऽणुरात्मा चेतसा वेदितव्यः । उद्धृत्य मानमुन्मानम् ।

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पत इति ॥
आराग्रमात्रो ह्यवरो ऽपि दृष्ट इति ॥ २२ ॥

अविरोधश्चन्दनवत् ॥ २३ ॥

कथमणोः सकलशरीरव्यापिनी सम्पत्तिरिति चेन्नायं विरोधो यथा हरिचन्दनबिन्दुः शरीरैकदेशे निपतितः कृत्स्नं शरीरमाह्लादयति तथेति ॥ २३ ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमात् हृदि हि ॥ २४ ॥

हरिचन्दनस्य युक्तं त्वगिन्द्रियसम्बन्धात्कृत्स्नदेहव्यापित्वमवस्थितेर्विशेषभावाच्छरीरैकदेशावस्थानस्य प्रत्यक्षत्वादिति चेन्नैतदेवम् । आत्मनो ऽप्यवस्थितिर्देशविशेषाभ्युपगमात् । तथा ह्याह श्रुतिर्हृदि ह्येष आत्मा स वा एष आत्मा हृदीति । हृदये वर्तमानस्त्वचा सम्बद्धः । सा च सकलशरीरव्यापिन्यपि पादे वेदनेति दर्शनादत्रोच्यते । मूर्तस्य मूर्तान्तरेणायं संयोगो नेन्द्रियेण विद्यमानेनापि कण्टकस्याभोक्तृत्वात् । कर्मकृतो ह्ययं सम्बन्धो भोक्तृभोग्ययोरुपलब्धिकार्यानुमेयः । परिमितत्वात्तु कण्टकस्य तद्देशसमुक्त्वा वेदना जीवस्योपजायत इत्यनवद्यम् ॥ २४ ॥

गुणाद्वा आलोकवत् ॥ २५ ॥

वेति विकल्पे । चैतन्यगुणव्याप्तेरालोकवत् । यथा प्रदीपव्याप्तेः सकलगृहकार्योपपत्तिः ॥ २५ ॥

व्यतिरेको गन्धवत् ॥ २६ ॥

कथं पुनर्गुणिदेशव्यतिरेको गुणस्येति काणादामन्यन्ते । अत्रोच्यते । यथा गन्धः केवलो गृह्यते न तदाधारस्य द्रव्यस्य नासिकादेशागमनं कल्पते । यदि द्रव्यावयवं तत्रागच्छेत्कालेन द्रव्यस्यापचयः स्यात् ॥ २६ ॥

तथा च दर्शयति ॥ २७ ॥

इतश्च व्यतिरेको यथा ऽस्माभिर्न्याय उक्तस्तथा गुणेन व्याप्तिं दर्शयति स एष देहप्रविष्ट आ लोमभ्य आ नखेभ्य इति ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

विज्ञानेन विज्ञानमादायेति जीवाद्विज्ञानस्य पृथगुपदेशात् गुणे त्वनव्याप्तिरणुरात्मेति पक्षान्तरम्। गुणाद्वेति परमताभिप्रायं सूत्रम्। न हि गुणिनं विहाय गुणस्य स्वातन्त्र्यं गुणत्वमेव हीयेत न हि शुक्लादयो भिन्नदेशा दृष्टाः। द्रव्यस्यापि कालेन क्षयो दृष्टः। विज्ञानेनेति चान्तःकरणाभिप्रायाशङ्कां परिणेतुं आलोमभ्य इति च त्वग्द्वारेणोपपद्यते ॥ २८ ॥

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

गृह्णीम एतत्संसारावस्थायामणुरात्मेति न तु तदेवास्य निजं रूपम्। तत्त्वमसीति ब्रह्मात्मत्वोपदेशात्। स्वाभाविकमणुत्वव्यपदेशः कथमिति चेत्तद्गुणसारत्वात्। तदिति बुद्धिरन्तःकरणमन्तरा विज्ञानमनसी इति वृत्तं परामृश्यते। तस्य गुणा रागादयो ऽहंप्रत्ययाश्रयाः। सारशब्दः प्रधानवचनः। तद्गुणाः सारं प्रधानं संसरणे यस्य जीवस्य स तद्गुणसारो वियदादिभिः सूक्ष्मावस्थैरिन्द्रियैश्च तदाश्रितैः पञ्चवृत्तिना च वायुना परिवेष्टितस्तत्स्वभावानुविधायी संसरतीत्यर्थः। तथाचाहुः पौराणिकाः।

पुर्य्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते।
तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन चेति ॥

तदिदमौपाधिकमणुत्वं जीवस्यातो द्रष्टव्यम्। मनसो ऽणुत्वादात्मनो ऽनियतमुच्यते। लिङ्गं पुनः सङ्कोचविकासि सूक्ष्मस्थूलशरीरापेक्षया प्राज्ञवद्यथाणीयान् व्रीहेर्वा यवाद्वेति हृदयायतनापेक्षमणीयस्त्वं ज्यायस्त्वं तु निजं रूपम् ॥ २९ ॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

कदाचिदुपाधिवियोगः स्यादात्मनस्ततश्चासत्त्वं मुक्तता वा स्यादित्याशङ्क्याह नायं दोषो यावदात्मभावित्वादुपाधियोगस्येति। यावदयमात्मा केवलेन द्वैतदर्शनेन संसरति तावत्कालभावी बुद्ध्याद्युपाधियोगः। कथं गम्यते। तस्य दर्शनाद्यो ऽयं विज्ञानमयः प्राणेषु हृदन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोका-

यनुसंसरति तथा विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमय इति। सुषुप्तिप्रलययोः कथमुपाधियोगः शक्यते वक्तुमित्युत्तरं पठति ॥ ३० ॥

पुंस्त्वादिवत्त्वस्य सतो ऽभिव्यक्तियोगात् ॥ ३१ ॥

तुशब्दो ऽवधारणे। सत एवास्य बुद्धिसम्बन्धस्य प्रबोधकाले चाभिव्यक्तिस्तस्याभिव्यक्तिर्यौवने ॥ ३१ ॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गो ऽन्यतरनियमो वान्यथा ॥ ३२ ॥

तच्चोपाधिभूतमन्तःकरणं सर्वैर्वादिभिरभ्युपगन्तव्यमन्यथात्मेन्द्रियविषयाणां सन्निधौ नित्योपलब्धिः स्यान्नित्यं चानुपलब्धिप्रसङ्ग अन्यतरनियमो वा। अन्यथान्यतरस्येन्द्रियस्यात्मनो वा नियमः शक्तिव्यवस्था कल्पनीया कदाचिदुपलब्धिहेतुत्वं कदाचिन्नेति सा चाशक्या स्वभावविपर्ययहेतुभावादतो मनो ऽभ्युपगन्तव्यम्। श्रुतिश्चान्यत्र मना अभूवन्नादर्शमन्यत्र मना अभूवन्नाश्रौषं इति। उक्तं च नैयायिकैर्युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति। बौद्धानां मनो ऽवस्थितं नास्ति तन्निराकरणार्थं सूत्रम्। यत्पुनरात्मविभुत्ववादिनां दोषकथनार्थं सूत्रमिति व्याख्यातं तदयुक्तम्। सर्वगतत्वे ऽपि शरीरदेशे भोगोत्पत्तेः कर्मनिमित्तत्वात्तस्य ॥ ३२ ॥

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

भोक्तैवात्मा न कर्ता बुद्धिः कर्त्रीति सांख्यमतं तन्निराकरोति। कर्ता आत्मा शास्त्रार्थवत्त्वात् यजेतोपासीतेति ॥ ३३ ॥

विहारोपदेशात् ॥ ३४ ॥

विहारः सञ्चरणं स ईयते अमृतो यत्र कामः तस्य शरीरे यथाकामं परिवर्तत इति ॥ ३४ ॥

उपादानात् ॥ ३५ ॥

तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति प्राणानामिन्द्रिया-

णां विज्ञानेन बुद्ध्यादिना ज्ञानं ग्राहकसामर्थ्यमादायेति ॥ ३५ ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

क्रियायां यज्ञादिकायां कर्तव्यव्यपदेशाद्विज्ञानं यज्ञं तनुत इति विज्ञानमिति जीवो न बुद्धिरुच्यते । न च जीवो निर्देश विपर्ययो भवेत् । करणत्वाद्बुद्धेस्तद्विभक्तिः स्याद्विज्ञानेनेति ॥ ॥ ३६ ॥

ननु स्वतन्त्रः सन्निष्टमेव कुर्यादत आह ।

उपलब्धिवदनियमः ॥ ३७ ॥

यथेष्टोपलब्धिः तथा क्रियायामनियमः ॥ ३७ ॥

शक्तिविपर्ययात् ॥ ३८ ॥

यदुक्तं बुद्धिः कर्त्रीति इदमयुक्तं शक्तिविपर्ययात् । कर्तृशक्तिः स्यात् करणशक्तिश्च निवर्तते यः कर्ता स जीवो ऽन्यत्करणमिति स्थितम् ॥ ३८ ॥

समाध्यभावाच्च ॥ ३९ ॥

निदिध्यासितव्य इति मनसः प्रवृत्तिनिरोधेनात्मरूपाभिमुखीभूतस्य सातत्येन यदवस्थानं स समाधिः तस्याभावः स्यात्कर्तृभावात् ॥ ३९ ॥

यथा च तक्षोभयथा ॥ ४० ॥

तत्पुनः कर्तृत्वं स्वाभाविकमौपाधिकं वेति चिन्त्यते । पूर्वोक्तैर्हेतुभिः । स्वाभाविकमिति प्राप्त उच्यते । न स्वाभाविकं कर्तृत्वमनिर्मोक्षप्रसङ्गात् । कर्तृत्वे सति तन्निमित्तं कर्म ततः सुखदुःखोपभोगः स्यात्सुषुप्तावस्थायां व्यभिचारात् । न च चैतन्यमूर्तेरात्मनः स्वभावान्तरं सम्भवति । न चौपाधिकं कर्तृत्वमपारमार्थिकम् । यथाग्निगते नोष्णगुणेन दाहोऽनुभूयते किमसावपारमार्थिको भवति । यद्यपि स्वात्मन्यौष्ण्यं स्वतो नास्त्येवमुपाधिवशात् कर्तृत्वमुपजायते । यथा च तक्षा वास्यादिकरणयुक्तः कर्ता तद्विमुक्तश्चाकर्तेति ॥ ४० ॥

## परात्तच्छ्रुतेः ॥ ४१ ॥

तदौपाधिकं कर्तृत्वं किं स्वतन्त्रस्य जीवस्याथ परादिति चिन्तायां स्वतन्त्रस्येति प्राप्तम्। न हि लोके कृष्यादिषु वर्तमानः परमपेक्षते रागादिप्रेरितो हि प्रवर्तत इति प्राप्ते ब्रूमः । परादीश्वरात्तच्छ्रवणात् एष ह्येव साधु कर्म कारयति य आत्मनि तिष्ठन्नात्मनो ऽन्तरो यमयतीति च ॥ ४१ ॥

यदि तर्हीश्वरो नियतो नैर्घृण्यं तस्य स्यादित्याह ।

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥४२॥

नैर्घृण्यादिदोषनिवृत्त्यर्थस्तुशब्दः। जीवकृतो यः प्रयत्नः शरीरेन्द्रियमनसामात्माधिष्ठितानां पाकादिधात्वर्थाश्रितः चेष्टाविशेषो भावना चोदना अपूर्वं धर्मो विधिरिति शास्त्रे व्यपदिश्यते स एव च लोकवेदयोर्वाक्यार्थः । नियोगस्तु तटस्थो निमित्तमात्रं प्रेषणाध्येषणादिवत् । तदपेक्ष ईश्वरः स्वत एव स्वव्यापारं कुर्वतो जीवस्य पर्जन्यवत्साधारणं कारणम् । एवं विहितप्रतिषिद्धयोः यजेत्न हन्तव्य इत्यवैयर्थ्यं स्यात् । अन्यथा वेदप्रामाण्यमस्तमियादित्यादिग्रहणमिति । स्वतन्त्रस्यैव जीवस्य कर्तृत्वमित्याशङ्क्य ईश्वरापेक्षं कर्तृत्वमिति स्थापितम् । वैषम्यनिर्घृण्य इत्यत्र तु कर्मापेक्षायां जगत्सर्ग इति विवेकः ॥ ४२ ॥

## अंशो नानाव्यपदेशात् अन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

पराधीनं यस्य कर्तृत्वं निरूपितं किमसौ ततो ऽत्यन्तभिन्नः किं वा अत्यतमभिन्न इति विचार्य्यते। अंशत्वे युक्ता तेनाविभागप्राप्तिरितरत्र भेदेनावस्थानमिति चिन्तायाः प्रयोजनम्। किं तावत्प्राप्तं स्वामिभृत्यन्यायेन भेद इति प्राप्ते ब्रूमः। तदंशो जीवोऽस्ति। अंशशब्दः कारणवाची । यथा पटस्यांशो ऽवयवस्तन्तुरिति । अस्ति च द्रव्यविभागवचनो यथा परिषद्द्रव्ये अंशिनो वयमिहेति । तयोरिह ग्रहणं न भवति किन्तूपाध्यवच्छिन्नस्यानन्यभूतस्य वाचको ऽयमंशशब्दः प्रयुक्तो यथाग्नेर्विस्फुलिङ्गस्य।

कथं पुनर्निरवयवस्य परमात्मनोंशः सम्भवति। आगमात्तावदवगम्यते। यथाग्नेः क्षुद्रा विस्फुलिङ्गा इति दृष्टान्त इति प्रणयनात्। यथा चाकाशस्य पार्थिवाधिष्ठानावच्छिन्नं कर्णछिद्रं च। यथा च वायोः पञ्चवृत्तिः प्राणः। यथा च मनसः कामादयो वृत्तयः। स चाभिन्नाभिन्नस्वरूपो ऽभिन्नरूपं स्वाभाविकमौपाधिकं तु भिन्नरूपमुपाधीनां च बलवत्त्वात् संमूर्च्छितस्तन्मयः संसरतीत्यभेदो ऽभ्युपगम्यते। स एव किं नेष्यते। नानाव्यपदेशात्। सो ऽन्वेष्टव्यः स विजिज्ञासितव्य इति तत्र तत्र जीवपरयोर्भेदव्यपदेशात्। आथर्वणिकाश्च ब्रह्मसूत्रे ब्रह्म दाशा ब्रह्मेमे कितवा इत्यभिधीयते। दाशाः कैवर्ताः। हीनजनस्यापि ब्रह्मत्ववत्सर्वस्याभेदं दर्शयति। तथा श्वेताश्वतरीयो मन्त्रः त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चयसि विश्वतो मुख इति ॥ ४३ ॥

## मन्त्रवर्णात् ॥ ४४ ॥

पादो ऽस्य विश्वाभूतानीति ॥ ४४ ॥

## अपि स्मर्यते ॥ ४५ ॥

ममैवांशो जीवलोक इति ॥ ४५ ॥

ननु नांशगतेन दुःखेन परस्यांशिनो दुःखित्वम। यथा नयनगतेन दुखेन चैत्रस्येत्याशङ्क्याह।

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवः सुखी च स्वकर्मवशान्नैवं परस्तस्य निमित्ताभावात्। प्रकाशादिवत्। यथा सौर्य्यश्चान्द्रमसो बाहुल्यादिषु ऋजुषु वक्रेषु तत्संबद्धो ऽपि तद्धर्मं भजते तद्वत्। यदुक्तं चैत्रवदिति तदयुक्तम्। देहस्य नेत्रादिरंशो न तस्याचेतनस्य दुखवेदना यस्य त्वात्मनो दुःखवेदना न तस्य नेत्रमंश इति विषमो दृष्टान्तः ॥ ४६ ॥

## स्मरन्ति च ॥ ४७ ॥

व्यासादय इति शेषः।
तत्र यः परमात्मायं स नित्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चापि पद्मपत्त्रमिवाम्भसा ।
कर्मात्मात्वपरोक्षस्तु मोक्षवन्धैः समुह्यते ।
स सप्तदशकेनापि राशिना युज्यते पुनरिति ॥ ४७ ॥

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

परमात्मना चेदभिन्नो जीवः कस्यानुज्ञापरिहारौ स्याताम् । न हि परमात्मनो ऽधिकारो ऽस्ति नित्यशुद्धमुक्तरूपत्वात् । अत्रोच्यते स्यातामनुज्ञापरिहारावंशस्य । देहसम्बन्धमधिकृत्यानुज्ञावचनमृतावुपेयादिति परिहारः परभार्य्यां न गच्छेदिति । यथाग्निः क्रव्यात्परित्यज्यते हुतवहस्तूपादीयते तद्वदेकत्वे ऽप्युपाधिवशाल्लौकिकव्यवहारोपपत्तिरिति ॥ ४८ ॥

ननु चैकात्म्यवादे सर्वकर्मसङ्करप्रसङ्गः । एकेनाश्वमेधे कृते सर्वैः कृतं स्यात् । एकेन सुरापाने कृते सर्वैः कृतमिति । नेत्युच्यते कथम् ।

## असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

अस्मत्पक्षे नास्तिव्यतिकरः । कस्मादसन्ततेः । अणुपरिमाणो जीव इत्युक्तम् । स चासन्ततो न सर्वशरीरव्यापी स्वे स्वे शरीरे वर्तमानो यदा कर्ता भोक्ता च तदा कुतः सङ्करः । देहादीनां च परिमाणामित्वाद्व्यवहारावस्थायां मुक्तस्य तु न व्यवहारो नोपाधिरिति नास्ति सङ्कराशङ्का ॥ ४९ ॥

## आभासा एव वा ॥ ५० ॥

येषां बहव आत्मानः सर्वगताश्च तेषां मते व्यतिकर इति दर्शयिष्यन्सामान्यदूषणमाह अविद्या आभासा एव । वेदबाह्या दर्शनभेदा इति सर्वेषामात्मनां सर्वशरीरसन्ततेः सर्वव्यवहारव्यतिकरः प्राप्नोतीति । अपरे त्वाभास एव चेत्येकवचनान्तं सूत्रं पठित्वा अन्यमर्थंवर्णयन्ति परमात्माभासो जीवः प्रतिबिम्बात्मा संसार्य्यविद्यापरिकल्पितः तस्य परिमितत्वादसन्ततेरव्यतिकर इति।

तदयुक्तम् । आभासस्यावस्तुत्वाभ्युपगमादवस्तुनः शशविषाण-कल्पस्याचेतनस्य कुतो बन्धो मोक्षो वा कर्माधिकारो वा । न च परमात्मनः संसारित्वमस्तीत्युक्तं पुरस्तादतो नार्षः पाठ इति ॥ ५० ॥

अदृष्टानियमात् ॥ ५१ ॥

अथ मनुषे ऽदृष्टं नियामकमिति तत्रानियमात्सर्वात्मनो सन्निधावुत्पद्यमानमदृष्टं साधारणं भवितुमर्हति । विशेषहेत्वभावात् ॥ ५१ ॥

नन्वभिसन्धावत् व्यवस्था, यस्य सङ्कल्पस्तस्यादृष्टं भवतीत्याह ।

अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

तेषप्येवमनियम एव । आदिग्रहणं श्रद्धादिपरिग्रहार्थम् । कथमेकस्मिन्मनसि सर्वात्मना समवेतत्वात्सङ्कल्पश्रद्धादयः साधारणा एव तन्निमित्तमदृष्टं साधारणमेव तत्कारितं च शरीरं सर्वार्थमित्यमादित्वे ऽप्यसाधारणो हेतुर्न शक्यते मृगयितुम् ॥ ५२ ॥

प्रदेशादिति चेत्तन्नान्तर्भावात् ॥ ५३ ॥

शरीरावच्छिन्नो य आत्मप्रदेशस्तत्रादृष्टं समवेतमेवं प्रतिशरीरं व्यवस्थितिरिति चेन्नान्तर्भावात् । सर्वेषामात्मनां यो ऽयं शरीरावच्छिन्नो देशस्तत्रापि सर्वे सन्ति सर्वगतत्वादन्यथा सर्वागतत्वप्रसङ्गात् । निरवयवस्य चात्मनः प्रदेशकल्पनानुपपन्ना । कल्पितस्य प्रदेशस्यावस्तुत्वादनियामकत्वमिति ॥ ५३ ॥

इति भास्करीयब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य
तृतीयः पादः समाप्तः ॥

# अथ द्वितीयाध्यायस्य चतुर्थः पादः

तथा प्राणाः ॥ १ ॥

असद्वा इदमग्र आसीत्तदाहुः किं तदसदासीदिति ऋषयो वा व ते ऽग्रे सदासीत्तदाहुः के त ऋषय इति प्राणा वा ऋषयः ते यत्पुरस्तात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसा ऽरुषंस्तस्माद्दषयः स यो ऽयं पुरुषः प्राण एष एवेन्द्र इत्यग्निप्रकरणवाजिनां प्रागुत्पत्तेः प्राणसद्भावश्रवणान्नित्या इति पूर्वपक्षवादी मन्यते। नन्वेतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति प्राणानामुत्पत्तिवादिनी श्रुतिर्दृश्यते। सत्यं सा तु गौणीति प्राप्ते उच्यते। यथा वियदादय उत्पद्यन्ते ब्रह्मणस्तथा प्राणा इन्द्रियाणीत्यर्थः । सप्त प्राणा प्रभवन्ति तस्मात्स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनो ऽन्नमिति । यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा इत्युत्पत्तिश्रुतीनां भूयस्त्वाद्विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सधर्मत्वमिति च न्यायात् ॥ १ ॥

यदुक्तमुत्पत्तिश्रुतिर्गौणीति तदुच्यते ।

गौण्यसम्भवात् ॥ २ ॥

नैतदेवं गौण्याः श्रुतेरसम्भवो गौण्य सम्भव इति विग्रहः। कथमसम्भवः श्रुतिभूयस्त्वादित्युक्तम् । प्रतिज्ञाविरोधाच्च । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रतिज्ञाय तत्सिद्ध्यर्थमेतस्माज्जायते प्राण इत्युक्तोपसंहरति पुरुष एवेदं विश्वं कर्म

तपो ब्रह्म परामृतमिति ब्रह्मैवेदं विश्वमिदं वरिष्ठमित्यात्मनोऽरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमुत्तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवतीति प्रतिवेदान्तं सर्वविज्ञानप्रतिज्ञानमुपसंहर्तव्यम् । उत्पत्तिश्रुतीनां मुख्यार्थसम्भवे ऽपेक्षितार्थत्वेनान्यथाकल्पनमयुक्तम् । तत्परत्वात्समस्तस्य हि प्रपञ्चस्य तद्विकारत्वात्तदनन्यत्वम् । तेन त्वद्वितीयात्सविज्ञानादपवर्ग इति विवक्षितो ऽर्थः । सर्वत्र या पुनरग्निप्रकरणश्रुतिः सा मुख्यार्था न । कथमवान्तरप्रलये ह्यग्निसाधनानां शर्करादीनां सृष्टिर्वक्तव्येति तदर्थो ऽसावुपक्रमः । तत्राधिकारी पुरुषः प्रजापतिरविनष्ट एव त्रैलोक्यमात्रं प्रलीनमतस्तदीयान्प्राणानालोक्य सा श्रुतिः प्रवृत्तेत्यविरोधः । एवं सर्वश्रुतीनां यथार्थता ॥ २ ॥

## तत्प्राकश्रुतेश्च ॥ ३ ॥

तस्य जायत इत्यस्याकाशादिष्वमुख्यस्य प्रागपि प्राणादिषु श्रवणान्मुख्यार्थतैव । न हि सकृदुच्चारितस्य पदस्य मुख्यत्वं गौणत्वं च युगपत्सम्भवति । यथाग्निर्ज्वलतीति निरपेक्षादग्निशब्दान्मुख्यार्थो गौणश्चेति न सम्भवतीति ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

इतश्च तेजोबन्नपूर्वकत्वाभिधानात् वाक्प्राणमनसामन्नमयं हि सौम्य मन आपो मयः प्राणस्तेजोमयी वागिति भूतानुग्रहं वागादीनां ब्रुवंस्तत्सद्भावमनुवदति । न चोत्पत्तिमन्तरेण प्रपञ्चसत्तावकल्पते । अत्र केचित्सर्वत्र भ्रान्ताः सिद्धान्तविरोधमपर्यालोचयन्तो भूयसामिति च न्यायमनादृत्याधिकरणं पूर्वपक्षविषयं वर्णयन्ति सिद्धान्त इति । स च न गौणी प्राणानां बुद्धीन्द्रियाणां मनः षष्ठानामुत्पत्तिश्रुतिर्भूतानां कर्मेन्द्रियाणां च मुख्येति कस्मादनादित्वात्करणसम्बन्धस्य जीवानाम् । यदि च करणानामुत्पत्तिरिष्येत जीवनामपि प्रसज्यत इति । तदिदं सुबुद्ध्युत्प्रेक्षितं युक्त्या स्वविलसितं व्याख्यानं न न्यायकुशलेभ्यो रोचते । मूलकारणेनानन्यत्वं जगतः सर्ववेदान्तेषु विधित्सितम् । तद्धि चेतनाचेतनात्मकम् । तत्र चे-

तमो भोक्तृवर्गो जीवः स्वभावत एव तदात्मक इत्यनन्यत्वं सिद्धम् । अचेतनवर्गस्य तु भूतेन्द्रियविषयसंज्ञस्य तद्विकारत्वेनानन्यत्वं वक्तुं सृष्टिप्रकरणानि प्रवृत्तानि । तत्र यदि प्राणास्ततो नोत्पद्येरन्नद्वितीयश्रुतिर्विरुध्येत । विकारत्वाभावात्तेषां च नित्यत्वे ऽपवर्गो ऽपि न सिद्धः । उच्छेत्तुमशक्यत्वाद्ब्रह्मास्वरूपवत् कूटस्थनित्यत्वात् । अनेन च न्यायेन वियदादीनामप्युत्पत्तिर्गौणी । भोग्यमन्तरेण भोगासिद्धेस्तेषामप्यनादित्वात् । अथ प्राणानां शक्तिरूपेण नित्यत्वम् । भूतानामपि शक्तिरूपेण नित्यत्वमविशिष्टम् । अस्मत्पक्षे ऽपि ब्रह्मणो ह्यनन्तः शक्तय इत्युक्तं पुरस्ताच्चानादित्वं संसारस्यास्मत्पक्षे ऽपि न विरुध्यते । सुप्तप्रतिबोधन्यायेन सर्गप्रलययोरविच्छेदादाविर्भावतिरोभावमात्रं च सृष्टिः प्रलयश्चेष्यते । नात्यन्तमसदुत्पद्यते । न सतो विनाशः । न च करणानामुत्पत्तिश्रुतेर्जीवस्योत्पत्तिश्रवणकृतोत्पत्त्यनुत्पत्तिव्यवस्था । न चाश्रयमन्तरा करणस्थितिर्भवति रंहति सम्परिष्वक्त इति । तस्मात् भूतवत् करणोत्पत्तिरिति स्थितम् ॥ ४ ॥

## सप्तगतेर्विशेषित्वाच्च ॥ ५ ॥

संख्याविप्रतिपत्तिनिरासार्थमारभ्यते किं सप्तोतैकादशेति । किं तावत्प्राप्तम् । सप्तेति । किन्तु गतेर्गतिरुत्क्रान्तिस्तमुत्क्रामन्तं प्राण उत्क्रामतीति । कथं गम्यते । विशेषितत्वाच्चक्षुरादयो वाक्पर्यन्तास्तत्र विशेषिताः ॥ ५ ॥

## हस्तादयस्तु स्थिते ऽतो नैवम् ॥ ६ ॥

तुशब्दः पक्षनिवृत्तौ । हस्तादयो ऽतः सप्तभ्यो ये निर्दिश्यन्ते हस्तो वै ग्रहः स कर्मणाभिग्राहेण गृहीतो हस्ताभ्यां कर्म करोतीति स्थिते च व्यतिरेकेणैव मन्तव्यं सप्तैवेति । कियन्तः पुनरेकादशस्युर्दशेमे पुरुषे प्राणा आत्मैकादश इति । आत्मेति मनो निर्दिश्यते । कार्याणि चैतावन्त्येव मनसः सङ्कल्पो विषयो बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धाः कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दाः ॥ ६ ॥

अणवश्च ॥ ७ ॥

विभुनीन्द्रियाणीति सांख्या मन्यन्ते तन्निरासः क्रियते। सूक्ष्मा न स्थूलाः परिमिताश्चोत्क्रान्तिश्रुतेस्तदानीं चानुपलब्धेः ॥ ७ ॥

श्रेष्ठश्च ॥ ८ ॥

श्रेष्ठो मुख्यः प्राणः स चोत्पद्यते । कथमेतस्माज्जायते इति तुल्यश्रुतित्वात्पूर्वन्यायसिद्धेरुत्तरचिन्तार्थं पृथग्योगकरणम् ॥ ८ ॥

न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समान इति वचनाद्वायुः प्राणः । अथवा सामान्याकरणवृत्तिः प्राणाद्यावायवः पञ्चेति करणानां सामान्यावृत्तिः प्राणा इति सांख्यसिद्धान्तादेवं प्राप्ते उच्यते । न वायुक्रिये । कुतः भेदेनोपदेशात् । प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषावति च तपति चेति । तथा वागादीनि करणान्युपक्रम्य वायोः प्राणस्य पृथगनुक्रमणात्तेह वाचमूचुस्त्वं न उद्गायेति । न च करणानां सामान्यावृत्तिश्चक्षुरादीनां विषयग्रहणात्मिका हि वृत्तिः प्रत्युत प्राणस्तेषामनुग्राहकः । यः प्राणः स वायुरिति वायोरेवावस्थान्तरं प्राणो न तत्त्वान्तरमिति दर्शनार्थः ॥ ९ ॥

ननु श्रेष्ठत्वाद्वागादीनां च तं प्रति गुणभावश्रवणाच्च बलिं कुरुतेति सोऽपि स्वतन्त्रः स्यादत आह ।

चक्षुरादिवत्तु तत्सहशिष्यादिभ्यः ॥ १० ॥

आशङ्कानिवृत्त्यर्थस्तुशब्दः । यथा चक्षुरादीनि जीवं प्रति गुणभूतानि तथा प्राणस्तैश्चक्षुरादिभिः सह शासनात् । प्राणसंवादे अचेतनत्वादुपकारदर्शनार्थेत्यादिग्रहणम ॥ १० ॥

यदि तर्हि प्राणस्यापि करणभावो विषयान्तरं तस्य वक्तव्यमित्याह ।

अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

विषयान्तरप्रसङ्गो न दोषः। कस्मादकरणत्वात्। किं पुनः कार्यमस्येति चेदाह श्रुतिः शरीरलक्षणम्। यस्मिन् उत्क्रान्त इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठ इति तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवतीति प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति ॥ ११ ॥

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

यथा मनः स्ववृत्तिभिः सङ्कल्पश्रद्धादिभिर्जीवस्योपकरोति। पञ्चवृत्तिग्रहणमुपकारदर्शनार्थम्। मुखनासिकासञ्चारी वृत्तिविशेषः शब्दोच्चारणविकार्य्यहेतुः प्राणो मूत्रपुरीषरेतसामधः पातयिता अपानः तयोः सन्धौ वर्तमानो वीर्यवत्कर्महेतुर्व्यान उदान ऊर्ध्ववृत्तिरुत्क्रमणादिहेतुः सर्वेष्वङ्गेषु भुक्तं पीतं समं नयतीति समान इति ॥ १२ ॥

अणुश्च ॥ १३ ॥

व्यापी प्राणः सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेणेति श्रुतेस्तत इदमुच्यते। अणुश्च। सूक्ष्मः परिच्छिन्नश्चोत्क्रान्तो पार्श्वस्थैरनुपलभ्यमानत्वात्परिच्छिन्नश्चोत्क्रान्तिगत्यागतिभ्याम्। यदुक्तं विभुत्वमाधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण सूत्रात्मना तद्विभुत्वमित्यविरोधः। ॥ १३ ॥

ज्योतिराद्यधिष्ठानं तु तदाम्नानात् ॥ १४ ॥

चक्षुरादिकरणजातं स्वमहिम्नैव स्वकार्ये वर्तते अन्वयव्यतिरेकसिद्धत्वादिति पूर्वः पक्षः। सिद्धान्तस्तु ज्योतिराद्यधिष्ठानं तु तदाम्नानात्। करणजातमग्न्यादिदेवताप्रेरितं प्रवर्तते। कथं तदाम्नानाद्देवतोपदेशादग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदिति ॥ १४ ॥

यद्येवं भोक्तृत्वं देवतानामेव प्राप्नोतीत्याह।

प्राणवता शब्दात् ॥ १५ ॥

प्राणोऽस्यास्तीति प्राणवान्देहेन्द्रियसंघातस्वामिना प्राणवता

जीवेन करणानां सम्बन्धः। कथं शब्दादत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमित्येवं जातीयकात्॥ १५॥

## तस्य च नित्यत्वात्॥ १६॥

तस्य करणजातस्य शारीरं प्रति नियतत्वात्तमुत्क्रामन्तं प्राणो ऽनूत्क्रामतीति श्रुतेः। देवाः पुनः परस्मिन्नैश्वर्य्ये स्थिता न हीनेन भोगेनार्थिनो न ह वै देवा मोहं गच्छन्तीति श्रुतेः॥ १६॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥१७॥

प्राणस्यैव वृत्तिभेदाश्चक्षुरादयो न तत्त्वान्तराणीति प्राप्त उच्यते। प्रकृताः प्राणा इद्रियाणि तत्त्वान्तराणि। कुतस्तेन प्राणेन व्यपदेशादेतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति। पृथक्त्वनिमित्तार्थाश्च व्यदेशा भवन्ति। ननु मनसो ऽपीद्रियत्वं न स्यात्। नैतदेवम्। दशेमे पुरुषे प्राणा आत्मैकादश इति निर्देशात्। समानजातीयत्वमेकां जातिं क्रियां गुणं चाश्रित्य संख्यायोगः प्रवर्तते। यथा ऽष्टौ ग्रहा इति। रूपादिज्ञानोत्पत्तिहेतुत्वाच्चेद्रियत्वं मनसः। कथं पुनश्चक्षुरादिषु प्राणशब्दः। प्राणवृत्तियोगाद्गौणः। तस्मादेत एतेनाख्यायन्त इति श्रुतेरन्यत्र श्रेष्ठान्तं वर्जयित्वा न तस्येन्द्रियत्वमित्यर्थः॥ १७॥

## भेदश्रुतेः॥ १८॥

ते ह वाचमूचुरित्युपक्रम्य वागादीनसूननुपसंहृत्याथ हेममाशयं प्राणमूचुरिति पृथगभिधानात्॥ १८॥

## वैलक्षण्याच्च॥ १९॥

इतश्च कार्य्यवैलक्षण्याच्च सुषुप्तेषु वागादिषु मुख्य एको जागर्त्ति स एवैको मृत्युनानाप्त इति सर्वेन्द्रियेषु परिस्पन्दात्मिका प्राणस्य वृत्तिः साधारण्यविषयालोचनात्मिकेन्द्रियाणामसाधारणी यथा योगवृत्तिरिति विवेकः॥ १९॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्॥ २०॥

सत्प्रकरणे तेजोबन्नानां सृष्टिं विधायाह सेयं दैवमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतमेकैकां करवाणीति। तत्र जीवकर्तृकमिदं नामरूपव्याकरणम्। यथा चारेणाहं परसैन्यं सकलं जानेति प्राप्त उच्यते। तुशब्दः पक्षनिवृत्त्यर्थः। संज्ञामूर्तिक्लृप्तिश्च नामरूपे व्याक्रियेतेत्यर्थः। सा त्रिवृत्कुर्वत ईश्वरस्य यस्त्रिरूपामेकैकां देवतामकरोत्स एवाग्न्यादित्यादीनां नामरूपमकरोत्। न हि गिरिसमुद्रादौ जीवस्य सामर्थ्यम्। कस्मादुपदेशात्। व्याकरवाणीति जीवेनात्मनानुप्रविश्येति सम्बन्धो न पुनरस्य व्याक्रियया सम्बन्धोऽस्ति। कार्यकारणप्राणपरिवृत्तस्य जीवस्य घटरथादिनामरूपव्याकरणदर्शनादस्तु कस्य चिज्जीवविशेषस्य नामरूपव्याक्रियेत्याशङ्कानिरासार्थमधिकरणम्। अन्ये तु प्राधानिकानां सत्त्वरजस्तमसां यदि नामरूपव्याक्रिया स्यात्ततोऽपवर्गाभावः स्याद्यदा तु सत्प्रवर्तकं नामरूपव्याकरणं ततोऽपवर्गसिद्धिरिति। अतोऽस्ति मन्तव्यलक्षणसम्बन्धोऽधिकरणस्येति वर्णयन्ति। तदसत्। कुतः सांख्यमतमाशङ्क्येदानीं न चेदमेवमन्तव्यलक्षणं सर्वत्रैव मननस्याविशेषात्सर्वं च श्रोतव्यलक्षणम्। श्रुतस्यार्थस्य पश्चाच्चिन्तनं मननमुच्यते। श्रवणमननाभ्यां हि ताभ्यां प्रत्यधिकरणं प्रत्यध्यायं च वाक्यार्थनिर्णयो जायते न पुनरन्योन्यनिरपेक्षादन्यतरः स्यात्॥ २०॥

## मांसादि भौमं यथा शब्दमितरयोश्च ॥ २१ ॥

त्रिवृत्कृतानां तेजोबन्नानां कस्य को विभाग इत्याह सारत्वप्रदर्शनार्थम्। शरीरस्य भूमेरिदं भौमं कार्यं मांसादि यथाशब्दं योयस्य कार्यस्यात्मा यः शब्दस्तद्यथाशब्दं प्रतिपत्तव्यम्। तथाहि श्रुतिरन्नमसितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽनिष्ठस्तन्मन इति। इतरयोरप्तेजसोरपि यथाशब्दं कार्यं विज्ञेयम्। मूत्रं लोहितं प्राणश्चापामस्थिमज्जावाक्तेजस इति॥ २१॥

यदि त्रिवृत्कृतमेकैकं किमिदमुच्यते अस्येदं कार्यमस्येदमिति सर्वं सवर्स्य स्यादित्याह।

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

तुशब्दश्चोदितदोषनिवृत्त्यर्थः। विशेषस्य भावो वैशेष्यं क्वचित्कस्य चिद्भूयोंऽशो लब्धत्रिवृत्करणस्य व्यवहारार्थत्वादीश्वरस्य प्रेक्षापूर्वकारित्वात्तद्वादस्तेजो ऽर्थविशेषवादः। द्विरभ्यासो ऽध्यायसमाप्तिद्योतनार्थः ॥ २२ ॥

इति श्रीभास्कराचार्यविरचिते शारीरकब्रह्मसूत्रभाष्ये
द्वितीयाध्यायस्य चतुर्थः पादो
ऽध्यायश्च समाप्तः ॥

---

# अथ तृतीयाध्यायस्य प्रथमः पादः ।

तदन्तरं प्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

अत्र पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते वैराग्यार्थं तस्माज्जुगुप्सेतेत्यन्ते श्रवणात् । जीवो मुख्यः प्राणसचिवः सेन्द्रियः समनस्को ऽविद्याकर्मपूर्वप्रज्ञावशेन सुखदुःखभोगार्थं पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते । कथं गम्यते । अथैनमेते प्राणा अभिसमायन्ति अन्यन्नवतरं कल्याणतरं स्वरूपं कुरुते इति वचनात् । इदमिदानीं विचार्य्यते । किं भूतसूक्ष्मैः परिवृतो याति उत नेति पूर्वः पक्षः । स्वर्गे नरके वा यत्र फलमनुभूयते तत्रैव भूतमात्रा लभ्यन्ते इति सांख्यादयो मन्यन्ते । तत्रः सिद्धान्तो ऽभिधीयते । तदन्तरप्रतिपत्तौ देहान्तरप्रदेशे देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तः परिवेष्टितो रंहति गच्छति । तदिदं सूक्ष्मं शरीरं करणानां दशानामाश्रयभूतं बुद्धिमनसोः पञ्चानां च वायूनाम् । कथं प्रश्ननिरूपणाभ्याम् । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रथमं निरूपणं प्रतिवचनं द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चसु अग्निषु श्रद्धासोमवृष्टिरेतोरूपाः पञ्चाहुतीर्दर्शयित्वेति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति ॥ १ ॥

ननु केवलाभिरद्भिर्वेष्टनं श्रुतं कथं सर्वैर्वेष्टनमित्याह ।

आत्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

आत्मकत्वादिचोदनानिवृत्त्यर्थ(१)स्तुशब्दः । अपां त्र्यात्मकत्वा-

---

(१) परिचोदनानिवृत्त्यर्थ इति पा०—२ पु० ।

दन्नतेजसो ऽपि परिग्रहासिद्धिः । भूयस्त्वात् । बाहुल्यात् । पञ्चम्यामाहुतावाप इत्युक्तं शुक्रशोणिते अपां बाहुल्यदर्शनात् । ननु पार्थिवो धातुर्भूयान् । अग्निवायुवियदपेक्षया भूयस्त्वमुक्तमतो ऽनुपालम्भः ॥ २ ॥

## प्राणगतेश्च ॥ ३ ॥

इतश्च सूक्ष्मशरीरस्य गमनं प्राणानां गतिश्रुतेः । तमुत्क्रामन्तं प्राणो ऽनूत्क्रामति । प्राणगतिश्च निराश्रयानुपपन्ना ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण इत्येवं प्राणानामग्न्यादिगतिश्रुतेर्न जीवेन सह गमनमिति चेन्न । भाक्तत्वात् । भज्यते मुख्या वृत्तिर्यया गौण्या वृत्त्या सा भक्तिः तत्र भवं भाक्तम् । अग्न्यादिगतमौपचारिकं अधिष्ठातृत्वनिवृत्त्यर्थं लोमकेशयोर्गत्यदर्शनादोषधीर्लोमानि वनस्पतीन् केशा इति ॥ ४ ॥

## प्रथमे ऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

प्रथमे ऽग्नौ द्युलोकाख्ये तस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति श्रवणात् । प्रत्ययविशेषश्च श्रद्धात्रायामश्रवणात् । कथं पञ्चम्यामाहुताविति चेन्न दोषः । ता एवापो यस्माच्छ्रद्धाशब्देनोच्यन्ते या आपः प्रश्न उपन्यस्ताः । हीति हेतौ । कथमुपक्रमोपसंहारयोरेवमुपपत्तेः सादृश्यप्रयोगोपपत्तेश्च । श्रद्धा वा आपः श्रद्धामेवारभ्य पक्षेन यजत इति प्रयोगदर्शनात् ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्तीत्युपक्रम्य धूमादिना पितृयागेन यथा चन्द्रप्राप्तिं कथयन्ति आकाशाच्चन्द्रमसमेष सोमो राजेति त इह प्रतीयन्ते तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा भवतीति भूतसूक्ष्मपरिवेष्टितं जीवं द्युलोके फलभोगाय देवाः प्राणाः प्रक्षिपन्ति सोऽयं प्रक्षेपो होम इहाभिप्रेतः ॥ ६ ॥

ननु तद्देवानामन्नं तद्देवा भक्षयन्तीति शशाङ्ककिरणारब्धदेहानां कथमनुभाव इत्याशङ्क्याह ।

भाक्तं चानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥

चेति दोषव्यावृत्तौ । भक्तमेषामन्नत्वं न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्तीति चर्वणनिवारणाद्भाक्तमेवान्नत्वम् । यथा राज्ञो विशो ऽन्नं विशामन्नं पशव इति । अनात्मविदां ह्येषां केवलकर्मिणां गुणभावो देहान्प्रति । तथाहि दर्शयति । अथ यो ऽन्यां देवतामुपास्ते ऽन्यासावन्यो ऽहमस्मीति न स वेद यथा पशुरेव स देवानामिति ॥ ७ ॥

कृतात्यये ऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवम् ॥८॥

चन्द्रमण्डलमारुह्य भुक्तभोगानामवरोहः पठ्यते । तत्रेदं चिन्त्यते । किं निरनुशया अवरोहन्ति आहोस्वित् सानुशया इति । यावत्सम्पातमिति वचनात् निरनुशया अवरोहन्तीति पूर्वः पक्षः । सम्पतन्त्यनेनेति कर्म सम्पातशब्देनोच्यते । यावत्तदस्ति तद्भुक्त्वेत्यर्थः । प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति श्रुत्यन्तराच्चरणाद्योनिप्राप्तिरिति मन्यन्ते । एवं प्राप्ते ऽभिधीयते । कृतस्य यागादेरत्यये भोगेन क्षये सति क्षीरस्येव दध्युत्पत्त्यानुशयवान् कर्तारमनुशेते फलोपभोगाय यस्तादित्यनुशयः कर्म तद्वानवरोहति । दृष्टस्मृतिभ्यां दृष्टा प्रत्यक्षा श्रुतिः । तद्य इह रमणीयचरणाभ्यासोहयन्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयाचरणा आरोहयन्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वेति । केचित्स्वर्गच्युतानां कपूययोनिप्राप्तिमनुपपन्नां मत्वा कपूयश्रुतिमन्यथार्थामर्थवादतया वर्णयन्ति । तदपव्याख्यानम् । रमणीयश्रुतिवत् कपूयश्रुतेरपि कर्मविपाककथनार्थत्वात् । सम्भवति चानात्मविदां केवलकर्मिणां मनुष्यावस्थायां पुण्यापुण्यकर्तृत्वं रागद्वेषादिवशादन्यथार्थत्वे सूत्रं सुकृतदुष्कृते एवेत्यनुपपन्नम् । स्मृतिरपि ततः शेषेण विशिष्टदेशजातिकुलरूपाद्याः श्रुतवृत्तचि-

त्सुखमेधसो जन्म प्रतिपद्यन्त इति ज्योतिष्टोमादेः स्वर्गार्थात्कर्मणः कर्मान्तरमनुशयः। शेषशब्दश्चोपभुक्तात् कर्मात् कर्माभिप्रायः। न हि स्वर्गार्थस्य कर्मणः काश्चिच्छेषः शक्यते कल्पयितुम्। श्रुतिप्रमाणत्वादस्यार्थस्य नानुमानमत्र क्रमते। तस्माद्यावत्सम्पातमिति यत्किञ्चित्करोत्ययमिति चैवं द्रष्टव्यम्। यावदामुष्मिकफलं कर्म तत्सर्वं तत्रैव क्षपयित्वा अवशिष्टेनैहिकफलेन जपहोमदानादिनावरोहन्तीति। छान्दोग्ये चायमेवार्थो ऽस्माभिः प्रदर्शितः। यथा कश्चित्सेवको राजकुलं प्रविष्टः चिरावस्थानादुपक्षीणवदुपकरणः छत्रपादुकादिमात्रपरिच्छदः स्थातुमशक्नुवन्निर्वर्तत इति दृष्टान्तोपन्यासेन। न ह्यसौ हस्तादिषूपयुक्तेषु तत्पुत्रादिर्वा निवर्तते। किं तर्हि छत्रादिना व्यतिरिक्तेनैवमत्र कर्मसमुदायापेक्षयोपयुक्तात्कर्मणः कर्मान्तरं शेषशब्दवाच्यमिति यथेतं यथा गतमेव प्रत्यवरोहति। यथेतमिति क्रियाविशेषणम्। अनेवमिति विपर्ययेणेत्यर्थः। पितृयाने धूमाकाशयोर्निर्दिष्टयोरवरोहे सङ्कीर्तनाद्यथेतमित्युक्तम्। अभ्रादीनामुपसंहारादनेवमित्युक्तम्॥ ८॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः॥ ९॥

ननु रमणीयचरणा इति चरणशीलमाचार इत्यनर्थान्तरम्।

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः॥

इति स्मृतिः। ततश्च न कर्मणावरोहो वर्ण्यत इति चेन्न। कर्मणोपलक्षणार्था चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते स्म॥ ९॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात्॥ १०॥

आचारस्यानर्थक्यं एवं सति स्यादिति चेन्नायं दोषः। तदपेक्षत्वात्कर्माधिकारस्याचारपूर्वकत्वात्। आचारहीनं न पुनन्ति देवा इति स्मृतेः॥ १०॥

## सुकृतदुष्कृते एव तु बादरिः॥ ११॥

सुकृतदुष्कृते एव चरणशब्देनोच्येते। चर्य्यत इति चरणं कर्म।

न हि लोकवेदयोश्चरणशब्दः शीले प्रसिद्धः । तुशब्द उपलक्षणार्थनिवृत्त्यर्थः । न हि मुख्ये सम्भवति लक्षणाश्रयणीयेति ॥ ११ ॥

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इदानीं चिन्त्यते अनिष्टादिकारिणोऽपि चन्द्रमसं गच्छन्ति उत नेति । किं प्राप्तम् । तेषामपि श्रुतं गमनम् । कौषीतकिनः समामनन्ति ये केचनास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति ॥ १२ ॥

ननु सुकृतिनां दुष्कृतकर्मभिः समानफलत्वमयुक्तमित्याह ।

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तु शब्दश्चोदितदोषनिवृत्त्यर्थः । संयमने यमालये दुःखमनुभूयेतरेषामारोहावरोहौ तत्र दुःखमनुभूय चन्द्रमण्डलमारुह्यावरोहन्तीति । कथं गम्यते । तदिति दर्शनाद्यमालयगमनदर्शनात् । पुनः पुनर्वशमापद्यते मे वैवस्वतं संयमनं जनानामिति च ॥ १३ ॥

स्मरन्ति च ॥ १४ ॥

इतश्च व्यासादयो नाचिकेतोपाख्यानादिषु ॥ १४ ॥

अपि सप्त ॥ १५ ॥

समुच्चयार्थोऽपि शब्दः स्मरणं समुच्चिनोति । सप्त नरका रौरवमहारौरवप्रभृतयः ॥ १५ ॥

ननु चित्रगुप्तादयोऽपरे स्मर्य्यन्ते कथं यमस्याधिष्ठातृत्वमत आह ।

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि रौरवादिष्वपि यमव्यापारादाज्ञाकरणादविरोधः॥१६॥

अथ सिद्धान्तः ।

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

तुशब्दः पक्षनिवृत्तौ । अनिष्टादिकारिणां चन्द्रारोहावरोहौ न स्तः । कथं पञ्चाग्निविद्यायां वेत्थ यथासौ लोको न संपूर्य्यत इति अस्य प्रश्नस्य प्रतिवचनं अथैतयोः पथोर्नैकतरेण न चरमातिविक्षुद्रारायसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयस्थानं तेनासौ लोको न सम्पूर्य्यत इति अनिष्टादिकारिणामनवरोहं दर्शयति । पथोरिति च विद्याकर्मणोर्निर्देशः तयोः प्रकृतत्वात् । तद्य इत्थं विदुरिति देवयानः पन्था इष्टापूर्त्ते दत्तमिति पितृयानन्तयोरन्यतरेणापि ये न गच्छति तानीमानि तृतीयस्थानभाञ्जि भूतानीति कौषीतकिश्रुतिरपि । एवं ये पितृयागे ऽधिकृता इष्टादिकारिणः ते सर्वे इति विपरिणेयाः । केचिदसौ चन्द्रलोको गौतमाग्निरिति विकारवाचिनाग्निशब्देन ब्रह्म लक्षणया व्यपदिश्यते । तदुपासनादर्चिरादिना गत्वा ब्रह्मप्राप्तिरिति कल्पयन्ति । तदसत् । अशाब्दत्वात् । यः शब्दात्प्रतीयते ऽर्थः स शाब्दः । न ह्यग्निशब्दो ब्रह्म प्रत्याययति । न हि घटमानयेत्युक्ते मृत्पिण्डमानीयते । यौगिके ऽपि शब्दस्य योगरूढत्वमेव गमनाद्गौरिति वत् । पञ्चाग्नीन्वेदेति चोपसंहारादग्नीनामेवोपास्यत्वम् । शुद्धः पूतः पुण्यलोको भवतीति हिरण्यगर्भलोकं दर्शयति । तत्र ज्ञानोत्कर्षं प्राप्य परब्रह्मप्राप्तिरिति निश्चयो ब्रह्म गमयतीति श्रुतिसामर्थ्यात् ॥ १७ ॥

## न तृतीये तथोपलब्धेः ॥ १८ ॥

न तृतीये स्थाने पञ्चम्यामाहुताविति नियमो ऽस्ति । पञ्चम्यामाहुतौ पुरुषशब्दवाच्यत्वमवधार्य्यते न पञ्चम्यामाहुतावधार्य्यते वाक्यभेदप्रसङ्गात् । तथोपलब्धेरपरेणाहुतिसंख्यानियममुक्तो न प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति ॥ १८ ॥

## स्मर्य्यते ऽपि च लोके ॥ १९ ॥

अपि च लोके स्मर्य्यते सीताद्रौपदीप्रभृतीनामयोनिजत्वम् ॥१९॥

## दर्शनाच्च ॥ २० ॥

इतश्च चतुर्विधो भूतग्रामो जरायुजाण्डजस्वेदजोद्भिज्जलक्षणः । तत्र योषित्पुरुषसम्बन्धमन्तरेण स्वेदजस्थावरयोर्दर्शनात् नाहुतिसंख्यानियमः ॥ २० ॥

ननु त्रीण्येव बीजानि भवन्ति आण्डजं बीजमुद्भिज्जमित्यत्र त्रिविधो भूतग्रामः श्रूयते कथं चतुर्विधत्वमित्याह ।

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

तृतीयेनोद्भिज्जशब्देन अवरोधो ऽन्तर्भावः संशोकजस्य स्वेदजस्येत्यर्थः । स्वेदजोद्भिज्जयोर्भूम्युदकोष्मप्रभवतुल्यत्वात् ॥ २१ ॥

स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

अवरोहप्रकारश्चिन्त्यते । तथैतमेवाध्वनि पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षतीत्याकाशादिस्वरूपापत्तिरिति पूर्वः पक्षः । सिद्धान्तस्तु स्वाभाव्यापत्तिराकाशादिसादृश्यप्राप्तिरित्यर्थः । कथमुपपत्तेः । न ह्यन्यस्यान्यभाव उपपद्यते तत्सादृश्यं तु युज्यते ॥ २२ ॥

नातिचिरेणाविशेषात् ॥ २३ ॥

द्राघिष्ठं कालं सादृश्येनावस्थानं स्यात् अल्पकाले हेत्वभावादिति प्राप्ते ब्रूमः । नातिचिरेणाल्पेन कालेनावरोहः । यावद्व्रीहिप्राप्तिस्तत्र विशेषवचनात् । अतो वै खलु दुर्निष्प्रतरमिति व्रीह्यादिभावादूर्ध्वं दुःखतरं निःसरणमिति ब्रुवन् पूर्वत्राचिरकालतां दर्शयति ॥ २३ ॥

अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

एत इह व्रीहियवाः ओषधिवनस्पतयः तिलमाषा जायन्त इति व्रीह्यादिजन्मानुशायिनां मुख्यं, लक्षणाहेत्वभावादिति पूर्वः पक्षः । तत्राभिधीयते । जीवान्तराधिष्ठिते व्रीह्यादौ संसर्गमात्रानुशायिनः प्रतिपद्येरन् । कुतः पूर्ववदाकाशादौ यथाभिलापस्तथात्रापि स्वकर्मसङ्कीर्तनाभावात् न स्थावरयोनित्वमत्रापीत्यर्थः ॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

अत्र सांख्यश्चोदयति ज्योतिष्टोमादिकर्माशुद्धमग्नीषोमीयपशुहिंसायोगादधर्मव्यामिश्रमतो व्रीह्यादिजन्म मुख्यमेवानुशयिनामिति । नेत्युच्यते । शुद्धमेव कर्म । कुतः शब्दात् । शास्त्रप्रमाणकत्वात् धर्माधर्मयोः । न हिंस्यात्सर्वभूतानीति सामान्यविधिः । शङ्कयन् विधिर्विशेषः । सामान्यविधेर्विशेषविधिर्बलीयान् । यथा यदाहवनीये जुहोति तेन तेन सोस्याभीष्टः प्रीतो भवतीति सामान्यविधिः पदे जुहोतीति विशेषविधिना बाध्यते तद्वद्वाह्यहिंसायां सावकाशत्वान्निरवकाशत्वात्तु क्रतुगतस्य विशेषविधेरतो गौणमत्र जन्म ॥ २५ ॥

## रेतःसिग्योगाच्च ॥ २६ ॥

इतश्च यज्ञादिसंश्लेषमात्रं व्रीह्यादिभावानन्तरमाम्नायते । यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्रूप एव भवतीत्यत्र संश्लिष्टो ऽनुशयस्तद्द्वारेण रेतः सेचनसमर्थेन पुरुषेण संयुज्यते न पुनरनुशयं रेतः असृग्भावं प्रतिपद्यते । यथा तत्र तत्र यागमात्रविवक्षा तथा व्रीह्यादाविति सूत्रार्थः । तद्भूय एव भवतीति तदाकृतिर्भवतीत्यर्थः । मनुष्येण भक्षितो ऽनुशयो मनुष्याकृतिः मेषेण भक्षितो मेषाकृतिर्भवति योनेः शरीरं रेतःसिग्योगानन्तरं स्त्रीयोनेरधिशरीरं दर्शयति शास्त्रं तद्य इह रमणीयचरणा इति तदपि व्रीह्यादिसंश्लेषमात्रे युज्यते ॥ २६ ॥

इति भास्करीयब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य
प्रथमः पादः समाप्तः ।

# अथ तृतीयाध्यायस्य द्वितीयः पादः ।

---

## सन्ध्ये सृष्टिराह हि ॥ १ ॥

जागरितावस्था चिन्तिता स्वप्नावस्था चिन्त्यते। जीवस्य स्वयं ज्योतिः स्वप्नसिद्ध्यर्थं सुषुप्तावस्था च सर्वोपाधिविनिर्मुक्तमभयमात्मरूपं दर्शयितुम् । अन्ये तु ध्यानोपयोगार्थमिति चिन्तयन्ति यद्यपारमार्थिकं रथादिनिर्माणं तदा विद्यायाः परिक्षयार्थं ध्यानमुपपद्यत इत्यधिकरणसम्बन्धं वदन्ति तृतीयस्य ध्यानलक्षणत्वादिति । तदयुक्तम् । प्रथमे ऽप्यध्याये यत्किञ्चिद्विचारितं तत्सर्वं ध्यानोपयोगितया अन्तस्तद्धर्मो दहर उत्तरेभ्य एवमादि। सन्ध्ये स्वप्नस्थाने सन्ध्यं तृतीयं स्वप्नस्थानमिति श्रुतेः। इहलोकपरलोकयोः सन्धौ जाग्रत्सुषुप्त्योर्वा मध्ये वर्तत इति सन्ध्यम् । तत्र सृष्टिः पारमार्थिकी यतः श्रुतिराह न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते स हि कर्तेति ॥ १ ॥

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

इतश्च कामानां निर्मातारं कर्तारं परमात्मानमेके शाखिनः समामनन्ति । य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण इति । काम्यन्त इति कामाः पुत्रादयः। तत्र कामा उच्यन्ते शतायुषः पुत्रपौत्रान् वृणीष्वेति प्रक्रमात् तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यत इति च वाक्यशेषात् । कृत्स्नप्रपञ्चस्य निर्माता परमात्मा तस्य च सृष्टिस्तथाभूता जाग्रत्सृष्टिवदिति पूर्वः पक्षः ॥ २ ॥

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्त-स्वरूपत्वात् ॥ ३ ॥

तुशब्दः पक्षं व्यावर्तयति । स्वप्ने सृष्टिर्मायामात्रं न बाह्यार्थोऽस्तीति मात्रग्रहणम् । का पुनरियं माया। अर्थशून्यप्रत्ययः। तथाहि नैरुक्तैः प्रज्ञानामसु पठ्यते च माया पुनर्विद्याभिख्या प्रज्ञाया इति । नन्वेवं निरालम्बनः प्रत्ययः प्राप्नोति । नायं दोषः। देशान्तरकालान्तरानुभूतानुस्मरणात् । स्वप्ने पूर्वप्रवृत्तार्थभवजनितवासनावासितं मनो नाडीषु परिवर्तमानं स्मृतिज्ञानेहतुर्भवति शुभाशुभकर्मप्रेरितं मोदत्रासादिदर्शनात्स एव स्मर्य्यमाणोऽर्थः प्रत्ययालम्बन इति न दुष्यति । दर्शयति च यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति। जीवस्य सैषा सृष्टिः सुखदुःखप्रतिभासनान्नेश्वरस्य । तथा च श्रुतिः । य एष स्वप्ने महीयमानश्चरति एष आत्मेति । ईश्वरस्य तु या सृष्टिराकाशादिविषया सा परमार्थैव । अत एव वैधर्म्यान्न स्वप्नादिवदित्युक्तं तर्कपादे । ये पुनर्जागरितावस्थापि मायामात्रमित्याघोषयन्ति ते सूत्रकाराभिप्रायं नाशयन्तः श्रोत्रियजनं मोहयन्ति । किं पुनर्जागरितप्रत्ययेनास्य वैधर्म्यम्। उच्यते । कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । देशः कालो विषयसन्निधिरिन्द्रियव्यापारो बाधाभावश्च कार्त्स्न्यं तेनाभिव्यक्तस्वरूपत्वाभावात्स्वप्नस्य ॥ ३ ॥

## सूचकश्च हि श्रुतेराचक्षते तद्विदः ॥ ४ ॥

इतश्च जीवसृष्टिरेषा यतः शुभाशुभसूचकस्वप्नश्रुतेः प्रतीयते ।

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शन इति ॥

स्वप्नविदश्च कथयन्ति । आरोहणं गोवृषकुञ्जराणां स्वप्नेष्वगम्यागमनं च धन्यमिति । खरयानतैलाभ्यञ्जनान्यधन्यानीति । न हि प्रज्ञाजस्य सुखदुःखयोग्यताऽवकल्पते । परस्यापि हेतुकर्तृत्वं नियन्तृत्वात । निर्मातारमिति चाविरुद्धं जीवपरयोरभेदात् ॥ ४ ॥

यदि तर्ह्यभेदो जीवस्यापीश्वरवत्साङ्कल्पिकीसृष्टिरस्तु। तत्रोत्तरम् ।

पराभिध्यानं तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

चोदितदोषनिवृत्त्यर्थस्तुशब्दः । सत्यमेकत्वं तदंशत्वाच्च तत्पुनर्भिन्नस्वाभाविकरूपमज्ञानतिमिरतिरोहितं परमभिध्यायतोऽभिव्यज्यते प्रागभिव्यक्तेर्न सङ्कल्पसिद्धिः यस्मात्तत ईश्वरादस्य बन्धविपर्ययौ । बन्धः संसृतिरज्ञानाद्विपर्ययो मोक्षः सम्यग्ज्ञानात् । तथा च श्वेताश्वतरीयो मन्त्रः ज्ञात्वा देवं सर्वपाशप्रहानिः क्षीणैर्जन्ममृत्युप्रहानिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्य्यं केवल आप्तकाम इति ॥ ५ ॥

ननु विस्फुलिङ्गस्येव दहनशक्तिरैश्वर्यशक्तिरपि जीवस्य युक्ता किंनिबन्धनस्तिरोभाव इत्याह ॥

देहयोगाद्वा सो ऽपि ॥ ६ ॥

सो ऽपि तिरोभावो देहयोगात् यद्येवमत्यन्तं भेद एवास्तु किमभेदाभ्युपगमेनेत्याशङ्कानिवृत्त्यर्थो वाशब्दः । तत्त्वमसीति श्रुतेर्भिन्नाभिन्नो जीवः स्वाभाविकं नित्यसिद्धमभिन्नं रूपमितरदौपाधिकं प्रवाहनित्यमिति विवेकः । स्वयंज्योतिशब्दप्रदर्शनार्थं स्वप्नप्रकरणमिति रथाद्यभावो युक्तः । न तत्र रथा इत्यभावं दर्शयति ॥ ६ ॥

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तो भवति । नाडीमेवोपक्रम्यान्यत्रोक्तं ताभिः प्रत्यवसृप्य पुरीतति शेत इति । तथा यत्र सता सौम्य तदा सम्पन्नो भवति । प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमित्यासां श्रुतीनामन्योन्यनिरपेक्षत्वात्सुषुप्तिस्थानेषु विकल्पप्राप्तावुच्यते । समुच्चयः स्यात् । कथम् । तदभावः स्वप्नदर्शनाभावः तदात्मनि नाडीषु च न विकल्पेनेत्यर्थः । कुत-

स्तेषां नाडीपुरीतदात्मनां सुषुप्तिस्थानत्वेन श्रवणात् नाडीष्विति सप्तमीतृतीयार्थे विपरिणेया। नाडीभिर्द्वाभिर्हृदयाकाशं परमात्मानमासाद्य स्वपिति। तेजसा हि तदा सम्पन्नो भवतीति तेजःशब्दो ब्रह्मणि द्रष्टव्यः। कस्माद्विभक्तिर्विपरिणेया। नाडीषु सुप्तस्य निःसंज्ञत्वे हेत्वभावादितरत्र तु सति सम्पद्य न विदुरिति। पुरीतन्नाम हृदयवेष्टनं तत्र शेते इति व्यपदिश्यते हृदयाकाशे शयानो यथा गर्भगृहे शयानः प्रासादे शेते इत्युच्यते। सम्भवितसमुच्चये न विकल्पो युक्तः पक्षे ऽन्यतमबाधप्रसङ्गात् ॥ ७ ॥

## अतः प्रबोधो ऽस्मात् ॥ ८ ॥

यस्मादात्मा सुषुप्तिस्थानं अत एव हेतोरस्मादात्मनः प्रबोधो जीवस्य जागरितस्थानप्राप्तिरुपपद्यते। प्रबोधहेतुश्चेश्वरः कर्म च। तस्माद्ब्रह्मैव सुषुप्तिस्थानमिति स्थितम्। अन्ये तु स्वप्नप्रवृत्तिः प्रलयवदविद्याविलयस्ततश्च ध्यानशास्त्रानर्थक्यं तन्माभूदिति ध्यानलक्षणे ऽस्मिन्नधिकरणमारब्धमिति कल्पयन्ति। तदयुक्तम्। सर्वमेव ध्यानोपयोगार्थं चिन्त्यते नेदमेव लक्षणमित्युक्तम्। न च सुषुप्तिमात्रेणाविद्यानिवृत्त्याशङ्का। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते ऽयनायेति वचनात्। अतः सदेव सुषुप्तिस्थानमिति सुषुप्तिन्यायव्युत्पादनार्थमधिकरणम्। यत्रायं सुषुप्तः तद्ब्रह्माभयं संसारोपप्लवरहितं प्राप्तव्यमिति ज्ञापनार्थं सुषुप्तिप्रकरणम् ॥ ८ ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

अनन्तरोक्तः प्रबोधश्चिन्त्यते। किं य एव सुप्तः स एवोत्तिष्ठति स्वे शरीरे अथान्य इति। अनियमो हेत्वभावादिति प्राप्त उच्यते। स एव। कुतः। कर्मणेक्षानुमानात्। पूर्वेद्युरर्द्धकृतं कर्मानुसन्धायापरेद्युः प्रवर्तते इति। तथानुस्मृतेः। अहमिदमदर्शमित्यात्मानं प्रत्यभिजानाति। तथा शब्देभ्यः प्रतिन्यायं प्रतियोन्यद्भवति सिद्धान्तायैवेति। तथा विधिशब्देभ्यो ऽग्निहोत्रं जुहुयात् आत्मानमुपासीतेत्याग्निहोत्रादिकर्मस्वर्धकृतेष्वन्यश्चेदुत्तिष्ठति ततो ऽधिकारविरोधः स्यात्। तस्मात्स एवोत्तिष्ठति नान्य इति।

येषामीश्वर एव साक्षात्संसारीति दर्शनं तेषां न पूर्वपक्षो ऽवकल्पते न सिद्धान्तः ॥ ९ ॥

## मुग्धे ऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

किमर्थमिदं चिन्त्यते। यदि मुग्धः सुप्तावस्थो ऽवधार्य्यते तदु ह सुप्तं धरेव न प्रबोधयेदिति । धरा तीव्राभिघातेन प्रबोधो न कर्तव्य इति। प्रयोजनं मुग्धे सत्येव सम्पन्न इति प्रदर्शनार्थम्। जागरितः स्वप्नः सुषुप्तिरुत्क्रान्तिरिति चतस्रो ऽवस्था जीवस्य प्रसिद्धा न पञ्चमी काचिदिति प्राप्तावुच्यते। मुग्धे मूर्छिते (१)सुखत्वाद्यभिहते अर्धसम्पत्तिर्मरणस्थानस्यार्धं सम्पद्यते। मुग्धः कुतः। परिशेषाद्विषयदर्शनाभावान्न जागरितस्वप्नान्तर्भावो। न मृतः। प्राणोष्मणोर्विद्यमानत्वात् । न सुषुप्तस्तद्वैलक्षण्यात् सुषुप्तो हि प्रसन्नवदनो भवति निमीलितनेत्रः श्वासं यथाक्रमं मुञ्चति। तस्मादर्धसम्पत्तिः कर्मशेषे सति प्राणोष्माणौ पुनरागच्छतः स्वप्नप्रयुक्तेन तु न प्राणोष्माणौ प्रत्यावर्तेते इति स्थितम् ॥ १० ॥

## न स्थानतो ऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

सुप्तावस्थायां यत्र जीवः सम्पद्यते तस्य ब्रह्मणः सतत्वममुना विचार्य्यते। ननु चेक्षतेर्नाशब्दमित्यारभ्य चेतनं ब्रह्म समस्तजगत्कारणमित्युक्तम। अतश्च ब्रह्म सतत्वं निर्द्धारितमेव किमर्थमिह चिन्त्यते। सत्यम्। भेदाभेदरूपं ब्रह्मेति समधिगतमिदानीं भेदरूपमभेदरूपं चोपास्यमुतोपसंहृतसमस्तभेदमभिन्नं सल्लक्षणबोधरूपमुपास्यमित्ययमंशो विचार्य्यते । निर्गुणं ब्रह्म चोदनायाम। सगुणास्तु तु शाण्डिल्यविद्यानिपुणो ऽयं विचारः । सगुणोपासनस्य तत्र तत्र प्रति प्रकरणं चोदनासामर्थ्येन निर्णीतत्वात् । अत्र पूर्वपक्षवादी मन्यते साकारं निराकारं च ब्रह्मोपास्यमुभयावगमात्कारणात्मना प्रपञ्चात्मना च ब्रह्मावस्थितम्। यथावस्थितवस्तूपासनं च युक्तम्। एवं प्राप्ते ऽभिधीयते। नोभयलिङ्गं ब्रह्मोपास्यं प्रपञ्चाकारेण साकारं निराकारं च। लिङ्गं लक्षणं चिह्नमुच्यते। निराकारमेवोपास्यं शुद्धं कारणरूपम्। कस्मादस्थूलमनण्वह्रस्वमिति प्रपञ्चाकारस्य स-

(१) मुसलाद्यभिहत इति द्वि० पु० पा०।

मस्तस्य निवर्तितत्वात्। स्वतश्च कारणं कूटस्थं नित्यमेकमेवाद्वितीयं पश्चात्तु कार्य्यं कादाचित्कं प्रवर्तते। ननु विकारात्मकमेव कारणम्। विकारपरित्यागे कारणस्वरूपमेव त्यक्तं स्यात्। ततश्च कारणमुपास्यमित्येतदेव हीयेत। तस्मात्पृथिव्यादिस्थानाकारसंयुक्तं ब्रह्मस्वरूपमुपास्यमिति। नेत्युच्यते। न पृथिव्यादिस्थानतो ऽपि परस्योभयलिङ्गता। स्वतो ऽभिन्नत्वादागन्तुकत्वाच्च। पृथिव्यादिस्थानकृतस्य रूपस्य ब्रह्मात्मको हि नामरूपप्रश्चो न प्रपञ्चात्मकं ब्रह्म यथा समुद्रात्मकः समुद्र इति। कथं पुनर्गम्यते। यतः सर्ववेदान्तेषु निष्प्रपञ्चब्रह्मोपास्यमवधार्य्यते। अशब्दमस्पर्शमरूपमव्ययं स एष नेति नेत्यात्मा अस्थूलमिति च भूतभौतिकरूपनिराकरणात्। न चैवं गन्तव्यमतो मायामात्रमिदं सर्वं प्राप्तमिति कारणे कार्यरूपं अनेकविधं नास्तीत्यवधार्य्यते। न पुनः प्रपञ्चरूपस्याभावः प्रतिपाद्यते॥ ११॥

## भेदादितिचेन्न प्रत्येकमतद्वचनात्॥ १२॥

सर्वाणि भूतानि सर्व एवात्मानः समर्पिता इति मूर्तामूर्तेन बाह्यप्रपञ्चेन नेमिस्थानीयेन परिवेष्टितानां नेम्यवस्थानीयानां विज्ञानात्मनामन्तरतमे परमात्मनि रथचक्रनाभिस्थानीये समर्पणाद्भेदो गम्यते। अतो न भेदाद्भोग्यभोक्ताकारवदुपास्यमिति चेन्न। प्रत्येकमतद्वचनात्। प्रत्युपाधिभेदवचनाभावादित्यर्थः। अध्यात्ममधिदैवतं च ये विज्ञानात्मानस्तेषां सर्वेषामचेतनानां च भूतभौतिकानां च यत्रैकीभावः स एव परमात्मा ध्येयत्वेनोपदिश्यते मधुविद्यायां यश्चायमस्यां पृथिव्यां तेजोमयो ऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरः तेजोमयो ऽमृतमयः पुरुषो ऽयमेव स यो ऽयमात्मेत्यादिना॥ १२॥

## अपि चैवमेके॥ १३॥

अपि चैवं भेददर्शननिन्दापूर्वकमपूर्वमेवोपास्यमेके शाखिनः समामनन्ति। मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। तथा श्वेताश्वतराणां भोक्तारं भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं

ब्रह्मैतदिति भोक्तृभोग्यनियन्तृरूपस्य प्रपञ्चस्य ब्रह्मात्मता न प्रपञ्चरूपता ब्रह्मण इत्यर्थः ॥ १३ ॥

## अरूपवदेव हि तत्प्रधानत्वात् (१)॥ १४ ॥

सृष्टिप्रकरणपर्य्यालोचनया प्रपञ्चरूपतायामाधिगम्यमानाया-मरूपवदेव ब्रह्मावधार्य्यते तत्प्रधानत्वादित्याह ॥ १४ ॥

## (२)अस्थूलमनण्वह्रस्वमदीर्घमशब्दमस्पर्शम-रूपमव्ययम् ॥ १५ ॥

आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदान्तरात्तद्ब्र-ह्मादिव्योह्यमूर्तः पुरुषः स वाह्याभ्यन्तरो ह्यजः तदेतद्ब्रह्मापू-र्वमनपरमनन्तरमवाह्यमपरमात्मा ब्रह्म सर्वानुभूरित्येवमादीनां वाक्यानां सृष्टिप्रकरणस्याप्यरूपवद्ब्रह्मप्रतिपादने तात्पर्य्यं मृ-दृष्टान्तप्रणयनादवगम्यते । अतः सल्लक्षणमेवाद्वितीयं प्रलयाव-स्थायामेवोपसंहृतसमस्तविकारं ब्रह्मा ऽहमस्मीति ध्येयम् ॥ १५ ॥

एवं तर्हि सल्लक्षणमेव ब्रह्म न बोधलक्षणमित्यत आह ।

## प्रकाशवद्वा वैयर्थ्यात् (३) ॥ १६ ॥

प्रकाशश्चैतन्यं ज्योतिरस्यास्तीति प्रकाशवद् बोधरूपं ब्रह्मेत्य-र्थः । शास्त्रस्यावैयर्थ्यात् । तमेव भान्तमनुभाति सर्वमादि-त्यवर्णं तमसः परस्तादिति ॥ १६ ॥

## आह च तन्मात्रम् ॥ १७ ॥

चैतन्यमात्रं रूपान्तररहितं स यथा सैन्धवघनो ऽनन्तरो वाह्यः कृत्स्नो रसघन एवं वा अरे ऽयमात्मा अन्तरो वाह्यः प्रज्ञानघन एवेति । वाहिरन्तश्च यथा लवणरसः सैन्धव-स्तथायमात्मा विज्ञानघन एवेत्यर्थः । श्लोकौ चात्र भवतः ।

ब्रह्माप्येति प्रपञ्चो ऽयं रूपं हित्वा तु वैकृतम् ।

---

(१) शाङ्करभाष्ये तु "अरूपवदेवहि तत्प्रधानत्वा"दित्यधिकसूत्रं दृश्यते ।

(२) शाङ्करभाष्ये अस्थूलेत्यादिसूत्रं नास्ति ।

(३) शाङ्करभाष्ये प्रकाशवच्चावैयर्थ्यम् इति पाठः ।

जहाति काठिनावस्थां जलधौ लवणं यथा ॥
चेतने ऽचेतनं क्षिप्तमभेदाच्चेतनो भवेत्।
रुमायां वस्तु विन्यस्तं तत्सर्वं लवणीभवेत् ॥ १७ ॥

## दर्शयति चाथो ऽपि स्मर्य्यते ॥ १८ ॥

मन्त्रो दर्शयति नित्यो नित्यानां चेतनश्चेतनानामिति । स्मर्य्यते च गीतासु आदित्यवर्णं तमसः परस्तात् । आह याज्ञवल्क्यः ॥

अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय आत्मा स्थितो ऽन्यो सौ हृदये दीपवत्प्रभुरिति ॥ १८ ॥

## अत एवोपमा सूर्य्यकादिवत् ॥ १९ ॥

यतः सल्लक्षणं बोधलक्षणं च ब्रह्मैकमद्वितीयमुपास्यं अत एव योगशास्त्रेषु ब्रह्मसूर्य्यकादिवदित्युपमोपादीयते । यथा स्वयंज्योतिरात्मा विवस्वान् यो भिन्नो बहुधैको ऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवः क्षेत्रष्वेमजो ऽयमात्मेति ।

एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति ॥

एकः सविता निर्विकारो जलसूर्य्यकास्तुपाधिभिन्नास्तद्वत् परमात्मा तदंशभूता जीवा इति ॥ १९ ॥

## अम्बुवदग्रहणान्न तथात्वम् ॥ २० ॥

अधुना दृष्टान्तवैधर्म्यमुच्यते । सवितुर्भिन्नदेशस्थाम्बुनो ग्रहणाद्युक्ता जलसूर्यकादयस्तत्र अत्र त्वमूर्तस्य परमात्मनः सर्वगतस्य च न सम्भवन्त्युपाधयो भिन्नदेशा येषु प्रतिविम्बोदयः स्यादिति ॥ २० ॥

अत्र प्रतिविधीयते—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेव ॥२१॥

न हि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तं साधर्म्यं विवक्षितमसम्भवादुपन्यस्यते । किं पुनः सादृश्यं वृद्धिह्रासभाक्त्वम् । यथा

जलवृद्धौ वर्द्धते ह्रासे च सति सूर्यकादिः तथोपाधिधर्मानुविधायिषु जीवेषु सामान्यात्मना परमो निर्विकारः स्वमहिमस्थो वर्तत इति दृष्टान्तप्रणयनम् । कस्मात्पुनरुपाधिधर्मान् भजन्ते क्षेत्रज्ञास्तदन्तर्भावादुपाधिपरिहृतत्वादेवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः ॥ २१ ॥

## दर्शनाच्च ॥ २२ ॥

कथं पुनर्जीवात्मनां परमात्मांशभूतानां अन्तर्भावो गम्यते । दर्शनात् । अनेन जीवेनात्मनानुप्रविश्य पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति तस्माद्युक्तमत एवोपमा सूर्यकादिवदिति ॥ २२ ॥

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २३ ॥

इतश्च प्रपञ्चाकारविनिर्मुक्तं सल्लक्षणं बोधलक्षणं च ब्रह्म निदिध्यासितव्यम् । द्वे वा व ब्रह्मणो रूपे मूर्तं चैवा मूर्तं चेति उपक्रम्य महारजनादीनि रूपाणि दर्शयित्वाम्नायते अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्तीति शुद्धमुक्तस्वरूपमवधारयति । कथम् । मूर्तशब्देन भूतत्रयमुच्यते अमूर्त्तशब्देन च भूतद्वयम् । महारजनादिरूपं जीवस्य वासनामयम् । तत्र प्रथमो नेति शब्दो मूर्तामूर्तनिषेधको द्वितीयो वासनाप्रतिषेधकः । तदेव वीप्सायुक्तेन प्रतिषेधेन भूतपञ्चकं सूक्ष्मं च वासनारूपं यत्किञ्चिदचेतनजातमनात्मरूपं पर्युदस्य शुद्धमात्मरूपमुपदिष्टं भवति न पुनः प्रपञ्चस्यैवाभावः प्रतिपाद्यते । अतत्परत्वाद्वाक्यस्य । तदेतदाह । प्रकृतैतावत्वं प्रकृतस्य पुरुषस्य यदेतावत्वमुपाधिद्वयपरिच्छिन्नत्वं तत्प्रतिषेधति ततो न विकल्पकं परिशिष्टं ब्रह्म-भूयः पुनर्ब्रवीति अन्यत्परमस्तीति । एषा चात्राक्षरयोजना । न ह्येतस्मादिति नेति न प्रपञ्चप्रतिषेधरूपादादेशनादन्यत्परमादेशनं ब्रह्मणो ऽस्तीति कृत्वा नेति नेत्युक्तमिति श्रुतेरभिप्रायः । ततो ब्रवीति भूय इत्येतन्नामधेयविषयं योजयितव्यम् । अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमिति

ब्रवीति । अपरे तु प्रकृतैतावत्त्वमित्यारभ्याधिकरणान्तरं कल्पयन्ति नेति नेति किं ब्रह्म प्रतिषिध्यते किं वा नामरूपं प्रतिषिध्यते इति सन्देहं कृत्वा नामप्रतिषेधो ऽयं न ब्रह्मप्रतिषेध इति सिद्धान्तयन्ति । तदयुक्तम् । सन्देहासम्भवात् । असन्नेव स भवतीत्यपवादादस्तीत्येवोपालब्धव्य इति चावधारणात्सर्वोपनिषत्सु च प्रपञ्चाकारनिराकरणादद्वितीयब्रह्मप्रतिपादनात् । अस्यामप्युपनिषद्युपक्रमोपसंहारयोर्ब्रह्मणावस्थानात् । तस्मात्सत्यज्ञानानन्तलक्षणं ब्रह्म न प्रपञ्चाकारेणाकारवदिति प्रदर्शनार्थं सूत्रम्। तत्रैतत्स्यात्सत्यं ज्ञानमनन्तमिति भिन्नाकारं प्राप्नोतीति तत्र सत्यत्वमिति धर्मिव्यपदेशस्तस्य चैतन्यं धर्मो न ह्यसतो धर्मयोगः । स चाग्न्यौष्णवदव्यतिरिक्तः अन्यत्राभावाद्व्यतिरिच्यते वियदादिलक्षणं चैतन्यरूपमसाधारणमिति । नान्तो ऽस्तीत्यनन्तं स्वरूपतो देशतः कालतो वानन्तत्वं घटाक्षितिनभसां तद्विपरीतमनन्तमिति एकमेवास्तु न धर्मधर्मिभेदेन स्वरूपभेद इति । न हि गुणरहितं द्रव्यमस्ति न द्रव्यरहितो गुण इति स्थितिः ॥ २२ ॥

## तदव्यक्तमाह हि ॥ २३ ॥

कस्मात्पुनस्तन्न गृह्यते यतस्तदव्यक्तं दुर्विज्ञेयमातिसूक्ष्ममाह च न चक्षुषा गृह्यते नापि वाचेति ॥ २३ ॥

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अव्यक्तं चेदनवगतमेव स्यात् । नेत्युच्यते । अपिशब्दः सम्भावनायाम् । संराधनकाले पश्यन्ति । संराधनं भक्तिध्यानादिना परिचर्या । कथं गम्यते श्रुतिस्मृतिभ्याम् । ज्ञानप्रसादेन विशुद्धसत्त्वं ततस्तु तं पश्यति निष्कलं ध्यायमानः ।

यं विनिद्रा जितश्वासाः पश्यन्ति सनकादयः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २४ ॥

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

यद्यव्यक्तः परमात्मातीन्द्रियो ध्यानगम्यः ततो ऽन्यत्वं तर्हि जीवस्य प्राप्नोति । नेत्युच्यते । यथा प्रकाशः सौर्यः । आदिग्रहणा-

दाकाशो वा जल घटाद्युपाधिधर्मानुविधायी विगतेषूपाधिविधिष्ववैशेष्यं प्रतिपद्यते अभिन्नः सन्नेवमयं जीवः प्रागप्यभिन्नः सन्नेव परं रूपं प्रतिपद्यते । परस्वरूपप्रकाशो ऽभिव्यक्तिः स च तस्मिन् कर्मण्युपास्ये परमात्मनि संराधनाभ्यासान्नान्यथेति । सति चैवं ये समाधिमन्तरेण ब्रह्मभूता वयमिति मन्यन्ते तेषां मिथ्याभिमानः स इति सूत्रकारेण सूचितं भवति । अथवा संराधन इत्यधिक्रियते । संराधने कर्मण्यभ्यासादिति ॥ २५ ॥

## अतो ऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

यस्मादभेदः स्वाभाविकः ततो हेतोरनन्तेन परमात्मना विधूयाविद्याजालमेकत्वं प्रतिपद्यते । यतो लिङ्गं स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवतीति ॥ २६ ॥

## उभयव्यपदेशादहिकुण्डलवत् ॥ २७ ॥

भेदाभेदव्यपदेशात् । ततस्तु तं पश्यते निष्कलं ध्यायमान इति भेदः कर्तृकर्मव्यपदेशादभेदस्तत्त्वमसीति अहिकुण्डलवद्द्रष्टव्यौ । परमात्माऽहिस्थानीयः कुण्डलस्थानीयो जीव इति ॥ २७ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

वाशब्दः प्रकारान्तरे । यथा सवितुः प्रकाशस्तदाश्रयश्च भवति । तयोः परस्परं भेदाभेदौ तेजस्त्वसामान्यादेवं जीवपरयोः ॥ २८ ॥

## पूर्ववद्वा ॥ २९ ॥

अहिकुण्डलपक्षे जीवस्यारूपस्यानित्यत्वप्रसक्तिः । सवितृप्रकाशपक्षे ऽप्याधाराधेयभावः प्रत्यहमुदयास्तमयौ च । तस्मात्प्रकाशादिवच्चावैशेष्यमिति । यथा विस्फुलिङ्गो ऽशभूतो यथा पञ्चवृत्तिः प्राणः स्वभावतो भिन्नो भिन्नेषूपाधिषु तु वह्निं वायुं च सम्वर्धते प्रकाशादिवच्चेति दृष्टान्तो ऽप्येवं योजनीय इति स्थितम् ॥ २९ ॥

प्रतिषेधाच्च ॥ ३० ॥

नान्यो ऽतो ऽस्ति द्रष्टेत्येवमादेश्च प्रतिषेधादभेदसिद्धिः ॥३०॥

परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३१॥

सत्यज्ञानानन्तानन्दात्मकात्कारणान्निर्द्धारितयाथातथ्याद्ब्रह्मणः परमन्यत्तत्त्वमस्तीति पूर्वपक्षयति सेतुव्यपदेशात् । अथ य आत्मा स सेतुर्विधृतिरिति । सलिलविधारणं वस्तु सेतुरुच्यते । यथा सेतोः परमास्ति तथात्रेति । उन्मानव्यपदेशाच्च । षोडशकलं ब्रह्मेत्युन्मितं परिच्छिन्नमुच्यते । ततो यत्प्रसिद्धं लोके सम्बन्धव्यपदेशात् । सता सौम्य तदा सम्पन्नो भवतीति । स चाप्यन्यस्मिन् सात द्वयोरप्युपपत्तेः चैत्रदेवदत्तयोरिव व्यपदेशात् । अथ य एषो ऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत अथाश्य एषो ऽन्तरक्षिणि पुरुषो दृश्यत इति प्राप्ते भिधीयते ॥ ३१ ॥

सामान्यात्तु ॥ ३२ ॥

तुशब्दः पूर्वपक्षं निरुणद्धि । न ब्रह्मव्यतिरेकं किं तदेकमेवेत्यवधारणात् । विधरणसादृश्यात्सेतुशब्दः ॥ ३२ ॥

बुद्ध्यर्थः पादवत् ॥ ३३ ॥

बुद्धिरुपासना तदर्थ उन्मानोपदेशः पादवत् । यथा मन आकाशयोरध्यात्ममधिदैवतं चत्वारो रागादयो मनसः पादाः कल्प्यन्ते चत्वारश्चाग्न्यादय आकाशस्य स्थानविशेषात् । प्रकाशादिवत् । सम्बन्धभेदव्यपदेशयोरुत्तरं सता सोम्येति सुषुप्तिस्थानविशेषात्सर्वोपाध्युपशमापेक्षया सम्बन्धश्रुतिरादित्यस्थानविशेषादेकस्यापि भेदोपचारो यथा प्रकाशस्य सलिलगतस्य ॥ ३३ ॥

उपपत्तेश्च ॥ ३५ ॥

स्वमपीतो भवतीति निर्देशोपपत्तेर्न रज्जुघटवत्सम्बन्धः ॥ ३५ ॥

तथान्यप्रतिषेधात् ॥ ३६ ॥

यथा न्याय उक्तस्तथान्यस्य प्रतिषेधात्स एवाधस्तादूब्रह्मैवेदं यस्मात्परं नापरमस्ति किञ्चिदिति ॥ ३६ ॥

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेनानन्तरोक्तेन न्यायेन सर्वगतत्वं ब्रह्मणः सेतुत्वादिवत्परिच्छेदनिराकरणात् । आयामशब्दार्थव्याप्तिवचनादित्यर्थः । यावान्वा अयमाकाशः तावानेषो ऽन्तर्हृदयाकाशः आकाशवत्सर्वगतश्च नित्यो ज्यायान् दिवो ज्यायान्पृथिव्या इत्यादि ग्रहणम् । सुहृद्भूत्वा प्रासङ्गिकं सर्वगतत्वं दर्शितम् । नात्र पूर्वपक्षाशङ्का ॥ ३७ ॥

फलमत उपपत्तेः ॥ ३८ ॥

कर्मफलमधिकारिणामत ईश्वराद्भवितुमर्हति । देशकालभिन्नविभागं ज्ञात्वा तस्योपपत्तेः ॥ ३८ ॥

श्रुतत्वाच्च ॥ ३९ ॥

इतश्च स एवैष महानज आत्मा अन्नादो वसुदान इति श्रुतेः॥३९॥

पक्षान्तरमुच्यते—

धर्मं जैमिनिरत एव ॥ ४० ॥

जैमिनिराचार्य्यो धर्मं हेतुं मन्यते । कस्मात् । अत एव श्रुतेरुपपत्तेश्च स्वर्गकामो यजेतेति । इतरथा कर्मोपदेशो ऽनर्थकः स्याद्यदि धर्मः फलहेतुर्न स्यात् । तथा चोक्तं स्वर्गकामाधिकरणे । असाधकं तु तादर्थ्यादिति पुरुषफलस्यातादर्थ्यात्फलार्थत्वादिति सूत्रार्थः स च साधितः फलायावस्थितो ऽपूर्वमिति ॥ ४० ॥

उच्यते—

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

तुशब्दो ऽवधारणार्थः । पूर्वोक्तमीश्वरं हेतुं मन्यते भगवान्बादरायणः । कुतो हेतुव्यपदेशात् । एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत इत्यन्तर्यामिब्राह्मणे चाधियज्ञश्च

नियन्तृत्वश्रवणात्सत्येव धर्मे परमात्मनः कर्मानुरूपफलदातृत्वमुच्यत इत्यविरोधः। केचित्पुनरान्तर्यामिव्यापारो नियोगः स फलहेतुरिति मन्यन्ते। तदयुक्तम्। तद्व्यापारस्य नित्यत्वात्सर्वप्राणिसाधारण्याच्च न केनचिदधिकारिणासौ निवर्त्यते। न हि नित्यस्य साध्यत्वमुपपद्यते। सव्यापारो हि प्रयत्ने पुरुषो नियुज्यते तस्मादसमीचीनमिति ॥ ४१ ॥

इति भास्करीयब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य
द्वितीयः पादः समाप्तः।



# अथ तृतीयाध्यायस्य
# तृतीयः पादः ।

---

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

सत्यज्ञानानन्तलक्षणं ब्रह्मोपास्यं न प्रपञ्चाकारविशिष्टमिति स्थितम् । इदानीं चिन्त्यते किं सर्ववेदान्तप्रत्ययमेव नानन्तलक्षणं ब्रह्मोपास्यं न प्रपञ्चाकारविशिष्टमित्युत भेद इति । ननु चेयं चिन्तानुपपन्ना यदा विशेयं ब्रह्म सर्वत्रैकं तदा तद्विषयं ज्ञानमुत्पद्यते । कथं भिद्यते । न च बहूनि ब्रह्माणि सन्ति येन तज्ज्ञानानि भिद्येरन् । अतश्च प्रतिवेदान्तं विज्ञानभेद इत्याशङ्कानुपपन्ना । नापि चोदनाद्यविशेषादित्यभेदसमर्थनं कर्तव्यम् । अचोदनालक्षणत्वाज्ज्ञानस्य । अत्रोच्यते । ज्ञानमिहोपासनमभिप्रेतम् । प्रथमं तावद्वाक्याद्ब्रह्मस्वरूपविषयं ज्ञानमुत्पद्यते । तच्च प्रमेयरूपावच्छेदकं घटादिविषयप्रत्यक्षादिज्ञानवत् । इदं तूपासनं निर्णीते वस्तुतत्त्वे पश्चात्क्रियते । यथा गुरुमुपास्ते राजानमुपास्त इति ज्ञानस्वरूपस्य गुर्वादेरुपासनं भवति । तच्च विधिगम्यम् । यथा चोपासनमवश्यं कर्तव्यं तथा चतुर्थेऽध्ये वक्ष्यामः । तस्मादुपपन्नेयं चिन्ता परापरविद्याविषया न्यायवत्तुल्यत्वात् । अत्र पूर्वपक्षवादी मन्यते । प्रतिवेदान्तं विद्याभेद इति । शाखान्तराधिकरणपूर्वपक्षवदत्रापि पूर्वपक्षो योजनीयः । नामभेदात्कर्मभेदो यथा ज्योतिर्गौरायुरिति तथात्रापि काठकं तैत्तिरीयकं वाजसनेयकं छान्दोग्यमिति रूपभेदात् कर्मभेद उक्तः । रूपं द्रव्यं दैवतं अन्यद्वान्येन कर्म निरूप्यते परिच्छिद्यते । तत्रोदाहरणं विश्वदेवदैवत्यादामिक्षायागाद्वाजिभ्यो वाजिनमिति यागान्तरं देवतागुणभेदात् । अस्ति चात्रापि गुणभेदः । पञ्चाग्निविद्यायां वाजसनेयिनः षष्ठमग्निमामनन्ति । छन्दोगाः पुनः पञ्चाकपालमस्तीत्युपलब्धव्य इति श्रूयते तेन सविद्यादिष्वतो रूपभेद उक्तः । कारीरीवाक्यान्यधीयानाः तैत्तिरीया भूमौ भोजनमामनन्ति नापरे । अस्ति चात्रापि धर्मभेदः शिरो

व्रतादिपुनरुक्तं च कर्मभेदकमिष्टम् । यदि च प्रतिवेदान्तमेकैव विद्या पुनरुक्तता च स्यात् । विद्याभेदे तु न दोष इत्येवं प्राप्ते ऽभिधीयते । सर्ववेदान्तप्रत्ययमेकमुपासनम् । प्रत्ययशब्दः प्रमाणवाची । चोदनाद्यविशेषादिति । शाखान्तराधिकरणसिद्धान्तसूत्रोपात्तहेतुचतुष्टयप्रदर्शनार्थम् । एकं वा संयोगरूपं चोदनाख्याविशेषादिति फलसंयोगः तत्राविशिष्टः उपास्यं ब्रह्मस्वरूपं सर्वत्राविशिष्टम् । तथा प्राणविद्यायां प्राणस्वरूपं पञ्चाग्निस्वरूपं इति चोदनाविशिष्टा । चोद्यत इति चोदना पुरुषव्यापारः प्रयत्नाख्यः सर्वत्राविशिष्टः । अन्ये तु चोदनाशब्देन नियोग उच्यते इति नियोगमवतार्य्य एवं वर्णयन्ति । स्वोत्प्रेक्षितं सर्वं नियोगमस्तके ऽध्यारोप्य सकलवाह्यप्रपञ्चप्रविलापयन्ननन्तरं च कर्तृभोक्त्रादिरूपं प्रविलापयन्नुपासकस्य ब्रह्मभावमभिव्यनक्तीति । तदयुक्तमिति पुरस्तादेवोक्तम् । एतावांश्च व्यापारकलापः कथं नियोगस्याचेतनस्योत्प्रेक्षित इति नोत्तरं वक्तव्यमित्युपरम्यते । समाख्या वा विशिष्टा प्राणविद्या पञ्चाग्निविद्या ब्रह्मविद्येति । एतैश्चतुर्भिर्हेतुभिस्तत्र तत्र प्रत्यभिज्ञानात् ततश्चैकत्वमिति सिद्धम् । प्रतिपत्तृभेदात्पुनरुक्तपरिहारो ये यस्याः शाखाया अध्येतारः तेषां प्रतिपत्त्यर्थं सैव विद्या पुनः पुनः श्राव्यते । एकस्यां तु शाखायां प्रतिपत्तुरभेदात्प्रतिप्रकरणं विद्याभेदो वाक्यानां परस्परनिराकाङ्क्षत्वात् । यथा शाण्डिल्यविद्योपकोशलविद्या स द्विधा भूमविद्या दहरविद्येति ॥ १ ॥

## भेदान्नेति चेत्स्यादेकस्यामपि ॥ २ ॥

विज्ञानानामेकत्वं गुणभेदान्नोपपद्यते । वाजसनेयिनः षष्ठमपरमाग्निरेवाग्निर्भवतीत्यादिना समामनन्ति । अतो न विद्यैक्यमिति यदुक्तं तत्परिहर्त्तव्यम् । अत्रोच्यते । स्यादेकस्यामपि विद्यायां एवं विधो भेदः । यथैकादशद्वादशकपालयोरग्नीषोमीयपुरोडाशयोः शाखान्तरपठितयोः कपालसंख्याभेदे ऽप्यभेदो दर्शपूर्णमासयोः सम्पादिकाभिप्रायं पञ्चत्वमुयत्राविशिष्टम् । छन्दोगानामपि यो ऽग्निः पठ्यते तं प्रेतं द्विष्टमित्राऽग्नय एव हरन्तीति । वाजिनामपि दिष्टाग्निरेवा नूद्यते प्राप्तत्वान्न विधी-

यते। अस्तित्वमेकत्रोक्तेः सर्वत्र द्रष्टव्यम्। न ह्येकं शिष्यते। न चास्तित्वशून्यं ब्रह्मोपास्यं भवति शशविषाणातुल्यत्वादेकत्वप्रत्याभिज्ञानाच्च। अपि च नास्तिकबुद्धिनिराकरणार्थं तद्वचनं न निष्कृष्टास्तित्वोपासनार्थम्। तथा च तैत्तिरीयश्रुतिरस्मिन्नर्थे असन्नेव सद्भवत्यसद्ब्रह्मेति चेदस्ति ब्रह्मेति चेद्वा ऽसन्तमेनं ततो विदुरिति। प्राणसंवादे ऽपि रेतो वै प्रजापतिरिति। गुणोपसंहारो नामाभिन्नभेदकं ग्रन्थनामत्वात्॥ २॥

## स्वाध्यायस्य तथात्वे हि समाचारे ऽधिकाराच्च सलिलवच्च तन्नियमः ॥ ३ ॥

यद्प्याथर्वणे शिरोव्रतं तदपि स्वाध्यायस्य हीति हेतौ। यतः तथात्वे अध्ययनाङ्गत्वे निमित्तसप्तमी तदङ्गतया शिरो व्रतं विधीयते इत्यर्थः। समाचारे ग्रन्थे इदमपि वेदव्रतत्वेन व्याख्यातमिति पठ्यते। नैतदचीर्णव्रतो ऽधीयीतेति चाधिकारात्। यथा सवाहोमाः शतौदनादयः। आथर्वणिकमेवैकाग्नौ हूयन्ते नान्येषां तथाध्ययनधर्मस्तेषामेव॥ ३॥

## दर्शयति च ॥ ४ ॥

सर्वे वेदा यत्पदगामनन्तीत्येवमादि। तस्माद्विद्यैकत्वम्॥ ४॥

## उपसंहारो ऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

प्रयोजनमर्थः समाने विज्ञाने सत्येकस्यां शाखायामुक्तस्य गुणस्यान्यत्राप्युपसंहारः प्रयोजनाभेदात्। यथाग्निहोत्रादिविधिशेषस्य सर्वत्रोपसंहारः॥ ५॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

तथा हेममासन्नं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायदिति वाजसनेयिनः समामनन्ति। छन्दोगाः पुनरथ हो य एवायं मुख्यः प्राणस्तमुद्गीथमुपास्यं चक्रिर इति। तत्र संशयः। किमत्र विद्याभेदः स्यादाहो स्वित् विद्यैकत्वमिति प्राप्ते पूर्वेण न्यायेन। ननु चान्यथात्वं नानात्वं विद्यायाः।

कुतः। शब्दात्। त्वं न उद्गायेति कर्तृत्वं प्राणस्य वाजिनां निर्दिश्यते। अन्यत्र कर्मत्वं तमुद्गीथमिति चेन्न। विभक्तिकृताद्विशेषाद्भेदो बहुतरस्यांशस्याविशेषादुद्गीथविद्येति च समाख्या, अविशेषात्॥ ६॥

## न च प्रकरणभेदात्परोवरीयस्त्वादिवत्॥ ७॥

न चेति पक्षस्याप्यावृत्तिः। विद्यानानात्वं प्रकरणभेदात्प्रक्रमभेदादित्यर्थः। कथम्। एकतो ज्ञानाक्रियायाः प्राणः कर्ता कीर्त्यते। सकला चोद्गीथभक्तिस्तत्र विवक्षिता। छान्दोग्ये तूद्गीथावयवः प्रणवः प्राणदृष्टेर्विषयः। न च वाक्यच्छायासमानतामात्रेणैकविद्यात्वम्। यथाभ्युदयेष्टिपशुकामेष्ट्योर्भेदः क्रमभेदात्। यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमाभ्युदेति स त्रेधा तण्डुलान्विभजेत् इत्यभ्युदये निमित्ते स एवामावास्यायागः प्रयोगमात्रभेदेनोपादिश्यते यः पशुकामः स्यात्सोमावास्यायामिष्ट्वा तण्डुलान् त्रेधा विभजेदिति पशुकामेष्टिर्यागान्तरमिष्ट्वेति पूर्वकर्मसमाप्त्यवगमात्परोवरीयस्त्वादिवत्। आकाशो ह्येवैतेभ्यो ज्यायानाकाशः परायणः स एष परोवरीयानुद्गीथ इत्यसावादित्यहिरण्यश्मश्रुगुणविशिष्टादुद्गीथोपासनाद्भिद्यते। यत्पुनरिह केश्चित् परोवरीयस्त्वादीनां गुणानां लक्षणार्थत्वेनाविवक्षितत्वात् ब्रह्मैवोभयत्रोपास्यमिति विद्यैकत्वमिति। तदयुक्तम्। यथा शब्दान्तरादिभिः कर्मभेदोऽवसीयते तथात्रापि तैरेव विद्याभेदः। यथोपकोशलादिविद्यानाम्। न च यथाश्रुतार्थग्रहणसम्भवे लक्षणा युक्ता। स्वमनीषिकायामुत्तरं न वक्तव्यम्॥ ७॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि॥ ८॥

उद्गीथविद्येति संज्ञातश्चेदेकत्वमुक्तं तदपि परोवरीयस्त्वादिति प्रकरणभेदात्संज्ञायाश्च दुर्बलत्वाद्भवति तु संज्ञैकत्वं भेदे। यथा द्वादशाहे गवामयने च प्रथममहः प्रायणीयम्॥ ८॥

## व्याप्तेश्च समञ्जसम्॥ ९॥

ओमित्येतदक्षरमुद्गीथमुपासीतेति इहाध्यासापवादपर्याय-

निराकरणद्वारेण व्याप्तिराश्रीयते । अध्यासो नाम प्रतिमादिषु विष्णुबुद्धिः । अपवादो नामाहङ्कारपर्युदासेनात्मनोपदेशः । पर्यायो नाम करः पाणिः । अतिव्याप्तिर्नाम सर्वत्रावस्थितस्योङ्कारस्योद्गीथशब्देन विशेषे ऽवस्थानम् । तत्राध्यासो न प्रतीयते । अनवधारणादुद्गीथे ऽक्षरमध्यास्यते अक्षरे चोद्गीथबुद्धिरिति । नाप्यक्षरबुद्ध्या तद्बुद्धिर्निवर्त्यते । अशक्यत्वादोङ्कारस्याप्यक्षरत्वात् । नापि पर्यायः । अप्रसिद्धत्वात् । अतः पारिशेष्याद्व्याप्तेर्हेतोर्विशिष्यते भक्त्यवयवे यः प्रणवः तमुपासीतेति समञ्जसमविरुद्धमित्यर्थः ॥ ९ ॥

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

वाजसनेयिनां छन्दोगानां च प्राणसंवादे ज्यैष्ठ्यश्रैष्ठ्यगुणान्वितस्य प्राणस्योपास्यत्वमुक्तम् । वागादयो ऽपि तत्र वशिष्ठत्वादिगुणान्विता उक्तास्ते च गुणाः प्राणे पुनः पुनः समर्पिताः । यथाहं वशिष्ठो ऽस्मि त्वं तद्वशिष्ठो ऽसीत्यादिना । कौषीतकीनां तु प्राणसंवादे वशिष्ठत्वादयो गुणा उक्ता वागादीनां न पुनः प्राणे समर्पिताः । कथमेवं हि समामनन्तीति यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च, यो ह वै वशिष्ठं वेद वाग्वा वशिष्ठा, यो ह वै प्रतिष्ठां वेद चक्षुर्वै प्रतिष्ठा, यो ह वै सम्पदं वेद श्रोत्रं वै सम्पत्, यो ह वायतनं वेद आयतनं स्वानां भवति मनो ह आयतनम् । अथ ह इमा देवताः प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठ इति स होवाच प्रजापतिर्यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव मन्यते स वै श्रेष्ठ इति, सा तु वागुच्चक्राम यथा मूका अवदन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्राणो होच्चक्रामतस्तदपद्यत यन्तेह समेत्योचुर्भगवाञ्जिति स होवाच प्राणः किं मे ऽन्नं भविष्यतीति यत्किञ्च श्वभ्य आ शकुनिभ्य इति, किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा अपमशिष्यत पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधाति नग्नुको हास्य भासो भवत्यनग्नो ह भवतीति । तत्रायमर्थः सांशयिकः । किं प्राणे व-

शिष्ठादयो गुणा उपसंहर्तव्या उत नेति । किं प्राप्तम् । तत्रानुपसंहारो ऽश्रुतत्वादिति प्राप्त उच्यते । अन्यत्र शाखान्तरे वशिष्ठत्वादयो गुणा उपादेयाः । कुतः । सर्वत्र प्राणविज्ञानस्य ज्येष्ठश्रेष्ठगुणयुक्तस्य प्रत्यभिज्ञानात् । न चैकं प्रत्यवशिष्यते विद्या । सर्वशाखासु सर्वपुरुषाधिकारात् । अश्रुतत्वमकिञ्चित्करम् । प्रत्यभिज्ञानस्य प्राप्तिहेतोर्विद्यमानत्वात् ॥ १० ॥

आनन्दादयः प्रधानस्य ॥ ११ ॥

ब्रह्मस्वरूपपरासु श्रुतिषु आनन्दरूपत्वं विज्ञानघनत्वं सर्वज्ञत्वं सर्वात्मकत्वमित्यादयो धर्माः केचित्क्रियमाणाः प्रधानस्य ब्रह्मणः सर्वत्राभेदात्सर्वत्रोपसंहर्तव्याः । प्रधानाव्यतिरेकाद्गुणाना यत्र प्रधानं तत्र तैर्भवितव्यमिति । कः पुनः पूर्वपक्षशङ्काहेतुः । प्रतिवेदान्तं वाक्यानां निराकाङ्क्षत्वादिति प्रधानस्य सर्वत्रैकत्वादेकान्तेन निराकाङ्क्षत्वमसिद्धमिति स्थितम् ॥ ११ ॥

यद्येवं प्रियशिरस्त्वादयो धर्माः प्राप्नुयुरित्याशङ्क्याह ।

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥१२॥

प्रियं मोदः प्रमोद इत्येतेषामप्राप्तिः । कुतः । यतो भेदे सति स्यातामुपचयापचयौ । विषयकृताः प्रियादयः परस्परं भिन्नाः सातिशयेषु भोक्तृषूपपद्यन्ते नाभिन्ने ब्रह्मणीत्यभिप्रायः । व्याख्यतं चास्माभिरानन्दमयाधिकरणे प्रियादिसङ्कीर्तनं परात्मनः प्रचुरानन्दस्यानन्दमात्रं अल्पमल्पं भागभूतान्युपजीवन्तीति प्रदर्शनार्थं नायं ब्रह्मधर्म इति ॥ १२ ॥

इतरे त्वर्थसामान्यात् ॥ १३ ॥

प्रियशिरस्त्वादिवदानन्दादयो नानुवर्तेरन्नित्याशङ्क्याह इतरे तु सर्वत्र स्युरर्थस्य ब्रह्मणः सामान्यादभेदादित्यर्थः । प्रथमे सूत्रे हेतुर्न प्रदर्शितः प्रियशिरस्त्वादिवैषम्यार्थमनेन सूत्रेण हेतुकथनं कृतमित्यपुनरुक्तता ॥ १३ ॥

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

कठवल्लीषु श्रूयते इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मन इत्युपक्रम्य पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिरिति। तत्र सन्देहः। किमिन्द्रियादीनां प्रत्येकं परत्वं विवक्षितमाहोस्वित्पुरुषस्यैव परत्वमाध्यानायोपदिश्यते इति। मुख्यार्थसम्भवात्प्रत्येकं परत्वं प्रतिपद्यते। अर्थभेदाच्च वाक्यभेद इति पूर्वः पक्षः, फलं च किमपि कल्प्यमिति। सिद्धान्तस्तु पुरुषस्यैव परत्वं प्रतिपाद्यते। कस्मादिन्द्रियादिपरत्वप्रतिपादनप्रयोजनाभावात्। कल्प्यं फलमिति चेन्न। पुरुषार्थपरमित्येकवाक्यतावगमात्। पुरुषस्य च परत्वप्रतिपादनमाध्यानाय। ध्यानाच्च प्रयोजनमस्त्यपवर्गप्राप्तिः। तथा चाह यच्छेद्वाङ्मनसी प्राज्ञ इति। बाह्यमिन्द्रियं मनसि नियमयेत् तच्च बुद्धौ तां च महति क्षेत्रज्ञे तं च विमलाकाशस्थानीये परमात्मन्येकीकृत्य स एवाहमस्मीत्येवं ध्यायेत्॥ १४॥

## आत्मशब्दाच्च॥ १५॥

एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते, दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति। तस्मादिन्द्रियादिपरत्वप्रतिपत्तेः पुरुषस्य परत्वप्रतिपत्त्यर्थं न निरपेक्षत्वमिति स्थितम्॥ १५॥

## आत्मगृहीतिरितरवदुत्तरात्॥ १६॥

ऐतरेयके श्रूयते आत्मा वा इत्ययमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्स ऐक्षत लोकानसृजत इति। तत्र सन्देहः। किमपर आत्मा किं वा पर इति। तत्र लोकसृष्टिश्रवणादपरो हिरण्यगर्भाख्यो निर्दिश्यते परश्चेन्महाभूतसृष्टिर्निर्दिश्येतेति पूर्वः पक्षः। सिद्धान्तस्तु परमात्मगृहीतिरितरवद्यथात्मन आकाशः सम्भूत इति सदेव सोम्येदमग्र आसीदिति। कस्मादुत्तरादीक्षाति शब्दात्॥ १६॥

## अन्वयादिति चेत्स्यादवधारणात्॥ १७॥

लोकसृष्ट्यन्वयादपर इति चेदिति यदुक्तमत्रोच्यते।

स्यात्परो वावधारणात्। आत्मा वा इदमेक एवाग्र आसीदिति सृष्टेः प्रागद्वितीयत्वं परमात्मन्युपपद्यते। हिरण्यगर्भे पुनरेक एवेत्यवधारणश्रुतिर्बाध्येत। उत्तरत्र मोक्ष एव पुरुषमुद्धृत्यामूर्च्छयदिति प्रथमजस्य सृज्यमानत्ववचनात्सदेव सोम्येदमग्र आसीदित्यत्रात्मग्रहणं साधितं ईक्षतेर्नाशब्दमिति। अतो दृष्टान्ताभिधानं युक्तम्॥ १७॥

## कार्याख्यानादपूर्वः॥ १८॥

छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नमाम्नाय तस्मै वा यो स आमनन्ति तस्माद्वा एतद्विशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधतीति। वाजसनेयिनस्त्वामनन्ति तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतदेव तदन्नमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेत्तदेवतदन्नमनग्नं कुरुत इति। तत्राचमनमनग्नताचिन्तनं च प्राणस्य प्रतीयते। ततः किमुभयमपि विधीयते किं वाचमनमनूद्य तत्र चिन्तनमिति विचार्यते। किं तावत्प्राप्तमुभयं विधीयत इति। नुनु भोजनकाले स्मृतितः प्राप्तमाचमनम्। सत्यम्। तत्प्राप्त्यर्थम्। इदं तु प्राणविद्याङ्गत्वेनोपदिश्यते इति पूर्वः पक्षः। सिद्धान्तस्तु यदपूर्वमप्राप्तं स्मृतितः तदाचमनीयास्वप्सु वासो दर्शनं विधीयते। कस्मात्। कार्याख्यानादहरहः कर्तव्याचमनस्य सङ्कीर्तनात्। न चानेकार्थविधानं कल्पयितुं युक्तम्। एकार्थविधाने सम्भवति तदन्नमनग्नं कुर्वन्त इति चोपसंहारात्। प्राणविद्याप्रकरणार्थविधानमेव आ शकुनिभ्य इत्यत्र तावत् दृष्टिविधानम्। न हि समस्तप्राणिभक्षणमुपासकेन कर्तुं शक्यं प्रतिषेधातिक्रमाच्च। तत्साहचर्यादाचमने ऽपि दृष्टिविधानमेवेति स्थितम्। परिदधातीति च परिधानं चिन्तनं युक्तम्। वचनमाचामेदिति विधिराचमनीयास्वप्सु नग्नतापर्यवसानाय दोषः प्राथम्याच्च। प्राजापत्यार्थे वासो दृष्टिः कर्तव्यानाममृतोपस्तरणमसीति भोजनोपक्रमे॥ १८॥

## समान एवञ्चाभेदात्॥ १९॥

वाजसनेयके ऽग्निरहस्ये शाण्डिल्यविद्याम्नाता सत्यं ब्रह्मेत्युपासीताथ खलु क्रतुमयो ऽयं पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैति एवं क्रतुर्हामुं लोकं प्रेत्याभिसम्भवति स आत्मानमुपासीत मनोमयं प्राणशरीरं नीरूपमाकाशात्मानमिति । बृहदारण्यके पुनः सा पठ्यते मनोमयो ऽयं पुरुषेभ्यः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्तीति । किं विद्याभेदः किं वाऽभेद इति । किं तावत्प्राप्तम् । विद्यैकत्वं वेद्यस्याभेदात् । एवञ्च गुणोपसंहारः शाखान्तरविहितवत् । अग्निरहस्ये विद्याविधिरारण्यके गुणविधिः सर्वस्येशान इत्येवमादेः । ननु मनोमयादीनां पुनः श्रवणमनर्थकं अविदितानामेव गुणानां साधनं युक्तम् । अत्रोच्यते अत एव कतिपयविहितगुणसङ्कीर्तनात्प्रत्यभिज्ञानासिद्धिरिति ॥ १९ ॥

सम्बन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके सत्यं ब्रह्मेत्युपक्रम्य तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले तुरुषो यश्चायं दक्षिणेक्षन् पुरुष इति । सत्यस्य ब्रह्मणो ऽधिदैवतमध्यात्मं चायतनविशेषमुद्दिश्य उपनिषदौ विधीयेते । तस्योपनिषदहमित्यधिदैवतमितरस्योपनिषदहमिति विद्यैकत्वादुभयमुभयत्रेति पूर्वः पक्षः । कथं सत्यब्रह्मसम्बन्धादेवमिति । यथा शाण्डिल्यविद्यायां तथा मण्डले ऽक्षिणि चेत्यर्थः ॥ २० ॥

न वा विशेषात् ॥ २१ ॥

न वेति व्यावृत्तिः । नोभयमुभयत्र । स्थानविशेषोपाधित्वात् । यथा वार्यस्यासीनस्योक्तो धर्मो गच्छतो न भवति ॥ २१ ॥

दर्शयति च ॥ २२ ॥

व्यवस्थामेवंजातीयकस्य तस्यैतस्य तदेव रूपं यदमुष्य रूपमिति स्थानविशेषादप्राप्तमप्यातिदिशति ॥ २२ ॥

सम्भृतिवद्व्याप्त्यपि चातः ॥ २३ ॥

ब्रह्म ज्येष्ठा वीर्यासम्भृतानीति ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्म भूतानां प्रथमं नु जज्ञे तेनार्हति ब्रह्मणा स्पर्द्धितुं क इत्येवं मान्त्रवर्णिकं राणायनीयानां खिलेषु सम्भृतिषु व्याप्तिप्रभृतिविभूतिजातमाम्नातं, तेषामेव शाण्डिल्यविद्याः ब्रह्मविद्याः पठ्यन्ते तासु विभूत्युपसंहारो विद्याभेदादिति शङ्कायामुच्यते । तदपि विभूतिजातं नोपसंहर्तव्यम् । अत एवायतनविशेषात् दहरविद्यायां हृदयमायतनं शाण्डिल्यविद्यायामपि तदेवोक्तमेव स आत्मान्तरहृदय इति । विभूतयश्चाधिदैविक्यः । ननु चात्राप्याधिदैविक्यो विभूतयः श्रूयन्ते ज्यायानेभ्यो लोकेभ्य एष उ य एवं भामनीरेष हि सर्वेषु लोकेषु भातीति । अत एवान्यनिवृत्तिरवगम्यते प्रकरणाधीताधिदैविकी विभूतिरुपादेया नेतरेति ॥ २३ ॥

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

अस्ति ताण्डिनां पुरुषो यज्ञः कल्पित इति तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पयित्वा आशिषादीनि च दीक्षादीनि तथाशीर्मन्त्रप्रयोगस्तथायुर्वृद्धिः फलं सह षोडशवर्षशतं जीवतीति । तैत्तिरीया अपि यज्ञं कल्पयन्ति तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नीत्येवमादिनानुवाकेन । तत्र पुरुषयज्ञे समाख्याविशेषाद्गुणोपसंहारप्राप्तावुच्यते । पुरुषविद्यायामपि चायमनुपसंहारो विभूतिवत् । कथम् । इतरेषां तैत्तिरीयाणां ताण्डिवदनाम्नात् । आत्मा यजमान इत्यारभ्य पुरुषसम्बन्धिभिरात्मादिभिर्यज्ञसम्पादनमत्यन्तविलक्षणम् । सर्वत्र प्रकारभेदादेवोपासनाभेदः । यत्किञ्चित्तु साधर्म्यं सर्वत्र सम्भाव्यमित्यसाधनम् । तत्फलभेदाच्च पूर्वस्मिन्ननुवाके न्यास इत्याहुर्मनीषिणो ब्रह्माणमित्युपन्यस्य तदुपासकस्य तत्प्राप्तिमुक्त्वा ब्रह्मणो महिमत्वमाप्नोति ब्रह्मणो महिमानमित्युपनिषदित्युक्त्वेदमाम्नायते तस्यैवं विदुषो यज्ञस्येति विद्वानेव यज्ञः सामानाधिकरण्यप्रयोगात् । यज्ञत्वं कथमिति श्रुत्यैव सादृश्यमुपपादितामिति । तथा छान्दोग्यगताशीर्मन्त्रा नोपसंहर्तव्या इति ॥ २४ ॥

## वेधाद्यर्थभेदात् ॥ २५ ॥

अथाथर्वणिकानामुपनिषदारम्भे मन्त्रः सर्वं प्रविश्य हृदयं प्रविध्यमनीः प्रविभजयञ्जिधा विष्टक्त इत्यादि । ताण्डिनां देवसवितुः प्रसुव इत्यादि । कठानां तैत्तिरीयाणां च शंनो मित्रः शं वरुण इत्यादि । वाजसनेयिनां प्रवर्ग्यब्राह्मणं पठ्यते । तत्रैते विद्यासूपसंहर्तव्या नेति विचारः । सन्निधिपाठात् मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गतयोपसंहर्तव्यानीति प्राप्त उच्यते । नैतदेवम । वेधाद्यर्थभेदादयो न विद्यायामुपयुज्यन्ते । मन्त्रलिङ्गेन त्वभिचारकर्मणि विनियुज्यन्ते । न च मन्त्राणामन्यथाकल्पना युक्ता । समाख्यानात् । सान्निध्येश्च लिङ्गस्य बलीयस्त्वात् । प्रवर्ग्यं चाग्निष्टोमे विनियुक्तं वाक्येनाग्निष्टोमे प्रवृणक्तीति । अग्निष्टोमः स्वर्गफलार्थं नित्यार्थं च विनियुक्तः । स्वर्गकामो यजेत वसन्ते वसन्त इति चारण्ये नूच्यत्वात्सान्निधिपाठः ॥ २५ ॥

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

अस्ति ताण्डिनां श्रुतिः । अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य भूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीति । तथाथर्वणे तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । शाट्यायनिनः पठन्ति तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति । तथा कौषीतकिनः सुकृतदुष्कृते धुनुते तस्याप्रीत्या ह्यायुः सुकृतमुपयन्त्यप्रिया दुष्कृतामिति । तदिह क्वचित्सुकृतदुष्कृतयोर्हानिः श्रूयते । क्वचित्तयोर्विभागेन प्रियैरप्रियैश्चोपायनम । क्वचिदुभयं हानमुपादानं च । तद्यत्रोभयं तत्र न किञ्चिद्वक्तव्यम् । यत्राप्युपायनमेव श्रूयते तत्र हानं त्वर्थादाक्षिप्यते । अन्यथा तदनुपपत्तेरुपायनं सम्प्राप्तिरुच्यते । यत्र तु हानमेव श्रूयते तत्रेदं चिन्त्यते उपायनमाक्षिप्यते नेति प्राप्तमश्रुतत्वादिति । तत्रोच्यते । हानौ तु केवलायां श्रुतायामुपायनवचनं प्रतिपत्तव्यं हानशेषत्वादुपायनशब्दस्य । कौषीतकिरहस्ये तथावगमात् ।

त्यक्तयोश्च पुण्यापुण्ययोः क्वचित् क्षेप इत्यपेक्षायामुपपद्यते सम्बन्धः। धूननं च हानमुच्यते कम्पनामूर्तत्वात्तयोः। तत्र दृष्टान्तोपादानं भाल्लविनां कुशा वानस्पत्याः स्थ ता मा पातेत्यस्मिन्निगमे सामान्यश्रवणे सति शाट्यायनिनामौदुम्बरा इति विशेषवचनादौदुम्बर्य्यः कुशा गृह्यन्ते। क्वचिद्देवासुरच्छन्दसामविशेषप्राप्तौ देवच्छन्दांसि पूर्वाणीति क्रमविशेष आत्मनः। तथा षोडशीस्तोत्रे काल विशेषे समयाध्युषिते सूर्य्ये इत्याश्रियते। तथोपगानं सामान्येन श्रुतमृत्विज उपगायन्ति नाध्वर्य्युरुपगायतीति विशेष आश्रीयते। वाक्यान्तरगतो विशेषो वाक्यान्तरे समाश्रयितव्यो वाक्यस्य परिपूरणाय। तदुक्तं बाधलक्षणे ऽपि तु वाक्यशेषः स्यात् अन्योन्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यादित्येष वै सप्तदश प्रजापतिर्यज्ञे आनुयन्तु इत्यस्य वाक्यस्य नानुयाजेषु ये यजामहे करोतीति शेष इति व्याख्यातम्। अन्यथा विकल्पः स्यादिति॥ २६॥

साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

देवयानेन पथा पर्यङ्कस्थं ब्रह्माभिप्रस्थितस्यार्धपथे सुकृतदुष्कृतवियोगं कौषीतकिनः समामनन्ति देवयानं पन्थानमासाद्याग्निलोकमागच्छतीत्युपक्रम्य स आगच्छति विरजां नदीं मनसैवाभ्येति तत्सुकृतदुष्कृते विध्वस्तमिति। तत्र यथाश्रुतमेव न हीनमिति प्राप्ते उच्यते। साम्पराये परलोकगमने देहादुत्सर्पणकाले हानं कस्मात् कर्तव्याभावात्। न हि ताभ्यामर्धपथे प्राप्तव्यमस्ति। तस्मात्प्रागेव सञ्चयं पुण्यपापक्षयः पश्चात्पठितः। कथं गम्यते। यतो ऽन्ये शाखिनस्ताण्डिनः शाट्यायनिनश्च प्रागेव हानं समामनन्तीति॥ २७॥

छन्दत उभयाविरोधात् ॥ २८ ॥

कथं पुनः परकीययोः परसङ्क्रान्तिरिति। छन्दतः। सङ्कल्पतो हि विदुषः शुभं सङ्कल्पयति तस्य सुकृतापत्तिर्यस्तु द्वेषादहितामिच्छति तस्य दुष्कृतम्। शास्त्रप्रामाण्यादेतद्गम्यते। धर्माधर्मव्यवस्थायां तदेव प्रमाणं न युक्तयः क्रमन्ते।

तथाच मन्त्रवर्णः तेन कृतादकृतादेनसस्य विद्यादेवासः पिपूता स्वस्तये । अकृतं प्रकृतमभिप्रेतम् । स्मृतिश्च ।

शप्यमानस्य यत्पापं शपमानं नियच्छतीति ॥

एवश्चैतन्मनुस्मृतिरुपपद्यते ।

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।

विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनमिति ॥

उभयोः कौषीतकिशाख्यायनिश्रुत्योरविरोधादेवम् ॥ २८ ॥

## गतेरर्थवत्त्वमुभयथा ऽन्यथाहि विरोधः ॥ २९ ॥

यदि पुण्यमपि निवर्तते किमर्था गतिरित्याशङ्क्योच्यते । गतेरर्थवत्त्वमुभयथा दुष्कृतनिवृत्त्या सुकृतनिवृत्त्या चोभाभ्यां प्रकाराभ्याम् । यदि पुण्यमनुवर्तेत तत्फलमनुभूयावृत्तिः स्यात् । ततश्चैतेन मार्गेण प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त इत्यनावृत्तिश्रुतेर्विरोधः स्यात् । अनेन पथा गतस्यानावृत्तिः । अणुः पन्था विततः पुराणस्तेनैति ब्रह्मवित्तेजसः पुण्यकृच्चेति विद्याकर्माक्षिप्ता गतिर्विशिष्टदेशप्राप्तये युज्यते ॥ २९ ॥

यदाह ।

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

उपपन्नो गत्युपदेशः । तस्य निमित्तं लक्षणं यस्यार्थस्य । तदिति गतिः परामृश्यते । तल्लक्षणस्यार्थस्योपलब्धेः । पर्यङ्कविद्यायां कथं कार्यब्रह्मप्राप्तिः तेन च संवादादिप्रयोजनं लिङ्गशरीरयुक्तस्य च कल्पते । यथा लोके करणवतां परस्परसंवादो दृश्यते तमुद्यद्रुमदरः सामभ्यः असावृङ्मूर्त्तिरव्ययः स ब्रह्मेति विज्ञेय ऋषिर्ब्रह्ममयो महानिति । तमाह केन मे पौंस्यानि नामान्याप्नोतीति प्राणेनेति ब्रूयात्, केन नपुंसकानीति मनसेति, केन स्त्रीनामानीति वाचेति, तमाहासु वै खलु लोके यत्ते ऽसाविति पादा ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिर्व्यश्नुते य एवं वेदेति । तद्द्वारेण च परं ब्रह्मप्राप्तिमन्तरेण लिङ्गनिवृत्त्यनुपपत्तेः नदीदृष्टान्तेन तत्रैवाप्युपश्रुतेः । अत्राधिकरणे व्याख्यातारः केचित्स्वमतिकल्पनया वर्णयन्ति गतेरर्थ-

वत्त्वं सगुणविद्यायां श्रूयते निर्गुणविद्यायां नास्त्युपयोग इति । तत्र तेषामवाचनमिति फल्गुत्वान्निराकरणे न प्रत्युद्यते ॥ ३० ॥

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

कासु चिदुपकोशलविद्यायां पञ्चाग्निविद्यायां दहरविद्यायां गतिः पठ्यते । मधुविद्यायां शाण्डिल्यविद्यायां च न श्रूयते । यत्रैव श्रूयते तत्रैव नियम इति प्राप्त उच्यते । स्यादानियमः । ननु प्रकरणादिविरोधः । नेत्युच्यते । श्रुतिलिङ्गवाक्यप्रकरणादीनां सर्वेषामाविरोधः । कथम् । शब्दानुमानाभ्याम् । ये चेमेऽरण्ये श्रद्धां तप इत्युपासत इति श्रुतेः । श्रद्धातप इति विद्यान्तरशालिनो निर्दिश्यन्ते । श्रद्धापूर्वकं ज्ञानं तप इत्युच्यते । मोक्षसाधनत्वमुभयोः सामान्यरूपमाश्रित्य तपः शब्दप्रयोगः । स्मृतिरपि शुक्लकृष्णे गती ह्येत इति । द्विराम्नानमनुचिन्तनार्थम् । अथवाऽनियमदर्शनार्थं तत्र तत्रेयं गतिर्भवतीति । अनुचिन्तनं च सामान्यलब्धम् ॥ ३१ ॥

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

विदुषामर्चिरादीना गत्वापवर्ग इति यदुक्तं तन्नोपपद्यते पुनरपि देहान्तरमुपपद्यते । कथम् । अपान्तरतमो नाम पुराणऋषिर्विष्णुशासनात्कलिद्वापरयोः सन्धौ व्यासः सम्बभूवेति स्मरणात् । एवमन्येषां ब्रह्मविदां वशिष्ठप्रभृतीनां पुनरुत्पत्तेश्च श्रवणात् । तत्रोत्तरम् । भिद्यते हृदयग्रन्थिः, तद्यो यो देवानां प्रत्यबुध्यत न स पुनरावर्तत इति च श्रुतेर्विदुषामपुनर्भवः । अधिकारे लोकानुग्रहार्थे व्यापारे भवास्तेषामाधिकारिकाणां व्यासादीनां यावदधिकारमवस्थितिः ईश्वरानुशासनात् उपपन्ना । स्वकर्म चारब्धफलं तावता कालेन क्षपयित्वा ।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदमिति ॥

नामादिप्रतीकोपासनेषु फलेयत्ताकथनार्थमधिकरणमिति केचित् । तदयुक्तम् । प्रतीकोपासनानां कर्मवत्परिमाणं पदान्तत्वात् । तदवगतमेवेति अनर्थिका चिन्ता । प्रायेण—

गतानुगतिको लोको न लोकस्तत्त्वचिन्तक इति ।
अत एव तत्त्वज्ञानं सुदुर्लभम् ॥ ३२ ॥

## अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्या- मौपसदवत्तदुक्तम् ॥ ३३ ॥

वाजसनेयिनामेतद्वै तदक्षरं गार्गि विदित्वा ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमिति । तथाथर्वणे ऽथ परा तदक्षरमधिगम्यते यत्र तद्द्रेश्यमग्राह्यमिति प्रतिषेधबुद्धीनां व्यवस्था न दहरादिविद्यासु प्राप्तिः प्रकरणविरोधादिति प्राप्ते ऽभिधीयते । अक्षरधियां सर्वत्राविरोध अपरिग्रहः । कस्मात्सामान्यात् । प्रपञ्चरूपपर्य्युदासस्य सर्वत्र समत्वात् । तद्भावाच्च । तस्य प्रतिपाद्यस्य ब्रह्मणः सर्वत्र भावादौपसदवत् । यथा जामदग्न्ये ऽहीने पुरोडाशिनीषूपषनित्सु सामवेदपठितानां अग्निर्वै होत्रं वेरध्वरस्य पितरं वैश्वानरमवसेकमिन्द्राय देवेभ्यो जुह्वतां हविः स्वाहेत्येवमादीनां अध्वर्य्युणा याजुर्वेदिकेन स्वरेणोपांशुत्वेन प्रयोगः क्रियते । प्रधानवशवर्तित्वाद्गुणानाम् उपसदश्च याजुर्वैदिकाः । तदुक्तं शेषलक्षणे गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग इति । विधिरूपाः पुना राजन्यादयः पुरस्ताच्चिन्तिता इति विवेकः ॥ ३३ ॥

## ईषदामननात् ॥ ३४ ॥

द्वासुपर्णेति मन्त्रं परविद्याधिकारे श्वेताश्वतरा आथर्वणिकाश्च पठन्ति । कठास्तु ऋतं पिबन्तः सुकृतस्य लोक इति । विद्याभेदो निर्देशादिति प्राप्ते भण्यते । विद्यैकत्वमिति । ईषत् एतावन्मात्रस्य द्वित्वसंख्यामात्रस्थितस्य वेद्यरूपस्य उभयत्रामननात् । जीवरूपानुवादेनेश्वररूपप्रतिपादनाविशेषात् । सर्वत्र जुष्टं यदा पश्यत्यन्यमीशमित्युत्तरमन्त्रात् । इतरत्रापि यः सेतुर्जीवानामक्षरं ब्रह्म यत्परमिति । तस्मादधिकगुणोपसंहारः । परविद्याश्चैते त्रयो ऽपि वेदान्तास्तत्र ये ऽस्मिन् पादे परविद्याविचारो नास्तीति प्रतिजानते तेषामानन्दादयः प्रधानस्येत्येवमादिविचारे विरोधः ॥ ३४ ॥

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥(१)

यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर इति हि द्विः उषस्तिकहोलप्रश्नयोरामनन्ति वाजसनेयिनः। ततोपदेशभेदोऽस्ति नोते चिन्तायामेकमेव प्रतिपाद्यम्। कस्माद्दात्मनोऽन्तरानन्द आत्मान्तरतमः सम्भवति। भूतग्रामवदिति वैधर्म्योदाहरणम्। यथा पृथिव्या आपोऽन्तरतमास्ताभ्यस्तेज इति। तस्मादिह भेदानुपपत्तिरिति चेन्नोपदेशवत्। यथोपदेशः प्रश्नः प्रतिवचनात्मको भिद्यते तथोपदेश्यभेदेनापि भवितव्यमन्यथोपदेशाद्वयानर्थक्यप्रसङ्गात्। अन्तरतमत्वं च जीवस्य शरीराद्यपेक्षया। यथा बलवान् देवदत्त इति न सिंहाद्यपेक्षया। परमात्मनः पुनः सर्वापेक्षया मुख्यमेवान्तरतमत्वम्। अपरा योजना षष्ठे यथा नवकृत्वस्तत्त्वमसीत्यभ्यासे अन्यदन्यप्रतिपर्यायं प्रतिपाद्यं भिद्यते तथा द्वौ। यस्ते कार्यकरणबुद्धिविज्ञानसन्ततिव्यतिरिक्तजीवप्रतिपादनमितरत्र तु परमात्मप्रतिपादनम्। वह्वैकत्वं तूपास्योपासकप्रतिपादनपर्यवसानात् ॥ ३६ ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

तद्यो ऽहं सो ऽसौ सो ऽहमित्यादित्यपुरुषमधिकृत्यामनन्त्यैतरेयिणः। तथा जाबालास्त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि इतीश्वरेणैक्यमात्मनश्च यतिव्यं न व्यतिहार इति पूर्वः पक्षः। जीवात्मतायामीश्वरस्यानिष्टप्रसङ्गादिति प्राप्ते ऽभिधीयते। व्यतीहारो व्यत्ययः कर्तव्यः द्विरूपा दृष्टिः कर्तव्येत्यर्थः। यथेतरगुणाः सर्वात्मत्वप्रभृतयश्चिन्तनीयास्तथायं व्यतीहारः। यतो विशिंषन्ति समाम्नातारः परस्परं त्वमहमहं च त्वमसीति परमात्मभावनायां एकत्वं दृढीभवति। यदुक्तं जीवात्मतायामीश्वरस्यानिष्टापत्तिरिति। तत्राग्निराशौ क्षिप्तविस्फुलिङ्गवदुपाधितिरस्कारोपपत्तेरनवद्यम् ॥ ३७ ॥

(१) शाङ्करभाष्यानुरोधात् सूत्रद्वयमिदं वस्तुत एकमेव।

## सैव हि सत्यादयः ॥ ३८ ॥

वाजसनेयके स यो हैतत् महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेत्यारभ्याप एवेदमग्र आसुस्ता आपः सत्यमसृजन्तेति प्रकृत्यानन्तरमुच्यते तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुष इत्यादि । तत्र पूर्वः पक्षः । द्वे एते सत्यविद्ये फलभेदात्पूर्वत्र जयतीमाल्लोकान्परत्र हन्ति पाप्मानं जहाति चेति प्राप्ते ब्रूमः । सैव या पुरस्तात्प्रकृता । हीति हेतौ । प्रकृतसत्यज्ञानात् तद्यत्तत्सत्यमिति च सर्वनाम्ना परामर्शात्स्थानविशेषसम्बन्धात्सैवोपदिश्यत इत्येकविद्यात्वम् । तस्योपनिषदहरहमिति च सर्वनाम्नाऽङ्गान्तरोपदेशः तस्य स्तुत्यर्थमिदं फलान्तरश्रवणमित्यदोषः । तथा चक्षुषीत्याज्यभागौ चक्षुरेव भ्रातृव्यस्य वृङ्क्त इति परार्थत्वात् फलश्रुतिरर्थवादस्तद्वदिति । अथवाहरहमित्युपनिषदोर्गुणफलसम्बन्धो गोदोहवदर्थवादाद्विधिः श्रेयानिति स्थितम् । ये पुनरिमांश्च सत्यविद्यां छान्दोग्ये हिरण्यकेशाङ्कितामुद्गीथविद्यामुदाहृत्य एकविद्यात्वमङ्गीकृत्य सत्यान् गुणानुपसंहार्यान् मन्यन्ते प्रकरणं श्रुतिं च बाधन्ते कर्माधिकृतपुरुषविषया हि सोद्गीथभक्तिव्यपाश्रयाच्च तत्प्रकरणत्वाच्च आदिमध्यावसानेषु चोद्गीथकर्तृव्यापरश्रवणात्प्रथमजमिति हिरण्यगर्भोपासनमित्यवगम्यते । तत्पुनः परमात्मविषयमेतद्धर्मोपदेशादित्युक्तम् ॥ ३८ ॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

छान्दोग्ये यदिदमस्मिन् ब्रह्म पुर इत्युपक्रम्यापहतपाप्मादयो गुणाः निर्दिष्टाः । वाजसनेयके तु कतम आत्मा योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योतिरुपक्रम्य विज्ञानात्मनः स्वप्नावस्थां च प्राज्ञेनात्मना सम्परिष्वक्त इति वर्णयित्वा संसारगतिश्च तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति तदनन्तरमथाकामयमानो (?) यो ऽकामो निष्काम इत्युक्त्वाथायमनस्थिको ऽशरीरः प्राज्ञ आत्मा ब्रह्मैव

लोक एव सामानिति होवाचेत्युक्त्वा स एष सर्वस्येशानः स वा एष महानज आत्मा अजरो ऽमर इत्याम्नायते प्रक्रमभेदाद्विद्याभेदप्राप्तिरिति । अत्रोच्यते । कामादिगुणजातं काम इति सत्यकामः सत्यसङ्कल्प इति गुणगणो लक्ष्यते तदितरत्र वाजसनेयके सङ्ग्रहीतव्यः वशित्वादयश्चेतरत्र । कस्मादायतनादिसामर्थ्यात्समानं हृदयं आयतनं सेतुत्वं लोकासम्भेदनप्रयोजनमिति । यत्र परं ब्रह्मोपास्यमुपदिश्यते सद्विद्यादिषु तत्रापहतपाप्मादयो भवन्ति । तैर्विना परमात्मत्वानुपपत्तेः । तत्सर्वैरपरविद्यासु गुणमेव । आनन्दादिगुणानां संसारनिवृत्तिहेतूनामश्यम्भावित्वादितरस्य चाब्रह्मत्वात् । एतावांस्तु विशेषः सद्विद्यादिषु गुणानां पृथक् चिन्तनं नास्तीति निर्गुणेत्युच्यते । फलं त्वविशिष्टमन्तर्गुणदेवतोपासनात् तथाभूतं हि तद्वस्तु तत्प्राप्तौ सर्वप्राप्तिरिति ॥ ३९ ॥

## आदरादलोपः ॥ ४० ॥

छान्दोग्ये वैश्वानरविद्यायां तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेत्यादिना पञ्चाहुतयो विहिताः । तासां वाक्ये अग्निहोत्रशब्दः श्रूयते । य एतदेवं विद्वानग्निहोत्रं जुहोति यथेह क्षुधिता बाला मातरं पर्युपासते एवं सर्वाणि भूतानि अग्निहोत्रमुपासत इति । तस्य भोजनलोपे लोपो ऽथालोप इति । जाबालानामादरवचनात्तदलोप इति पूर्वपक्षः । पूर्वमतिथिभ्यो ऽश्नीयात् यथा वै शेषमग्निहोत्रं परस्य जुहुयादेवं तदिति अतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती श्रुतिरादरं प्राणाग्निहोत्रे करोति । अग्निहोत्रशब्दश्च धर्मातिदेशार्थो यथा कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति । भोजनलोपे अद्भिरन्येन वा कर्तव्यम् ॥ ४० ॥

इति प्राप्ते सिद्धान्तो ऽभिधीयते ।

## उपस्थिते ऽतद्वचनात् ॥ ४१ ॥

उपस्थिते प्राप्ते भोजने अतः प्रथमाहृताद्भक्तात् प्राणाग्निहोत्रं कर्तव्यम् । कुतस्तद्वचानात् । तस्य भोजनार्थस्य हो-

मसम्बन्धवचनात् भक्तप्रयोजको होमः। यथा सप्तमं पद-मभिगृह्णातीति क्रमप्रयुक्तैकहायनीविषयत्वात्सप्तमपदपांशुग्रह-णस्याप्रयोजकत्वमुक्तं पदकर्माप्रयोजकं नयनस्य परार्थत्वा-दिति चतुर्थे। वैश्वानरोपासकस्य वाचनिकं पूर्वभोजनमि-त्यदोषः। स्तुतिर्वा विधिवाक्यगतं च नामधेयमतिदेशकं स-त्यामाकाङ्क्षायां कौण्डपायनीयहोमे ऽत्राग्निहोत्रपदमर्थवादगतं तत्रातिदेशकं स्तुतिपरत्वात् । यथोपशयो यूपो भवतीति केन चित्सादृश्येन सिद्धेन स्तुत्युपपत्तेरित्युक्तं सप्तमे ॥ ४१ ॥

## तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि ओमित्येतदक्षरमुपासीते-त्यादीनि तेषां निर्द्धारणमेकान्तभावः। तस्य क्रतुष्वनियमो गोदोहनादिवदक्रत्वङ्गत्वात्तद्दृष्टेरित्यनियमदर्शनात्तेनोभौ कुरु-ते यश्चैतदेवं वेद यश्च न वेदेति । यतः साङ्गक्रतुफलात् पृथगेवाप्रतिबन्धः फलमुपासनानां कर्मफलस्यैवातिशयो ऽप्र-तिबन्धो यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वी-र्यवत्तरं भवतीति इतरदपि कर्म वीर्यवदेव फलवदित्यर्थः । फलश्रुतिरर्थवाद इति पूर्वपक्षाशङ्का ॥ ४२ ॥

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

वाजसनेयके ऽध्यात्मं वागादीनां प्राणः श्रेष्ठो ऽवधारितो ऽधिदैवतमग्न्यादीनां वायुस्तथा छान्दोग्ये वायुर्वाव संवर्ग इत्यधिदैवमग्न्यादीनां वायुः संवर्गः। अत्राध्यात्मं वागादीनां प्राण इति यः प्राणः स वायुरिति वायुप्राणयोरभेदश्रुतेर्विद्यैकत्वमध्या-त्माधिदैवयोरिति प्राप्त उच्यते। विद्याभेदः स्थानभेदनियमः। तौ वा एतौ द्वौ समुद्रौ वायुरेव देवेषु प्राणः प्राणेष्विति भेदव्यपदेशात्। भवति च वस्त्वभेदे ऽपि गुणभेदात्कर्मभेदः प्रदानवत्। इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वाराज्याये-ति। प्रदानभेदः। प्रक्षेपनानात्वम्। तदुक्तं सङ्कर्षे नानादेवता पृथक्-त्वादिति ॥ ४३ ॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

नेवं वेदमग्रे सदासीदिव वा इदमग्रे नैवासीत्तद्धत्तन्मन एव षट्त्रिंशत्सहस्राण्यपश्यदात्मनो मनोमयान्मनाश्चित्तस्ते मनसैवाधीयन्त मनसा चीयन्त मनसैव ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा शंसन्त यत्किञ्चिद्यज्ञे कर्म क्रियते मनो वाचमसृजत सा वाक् प्राणमसृजत। अनेन क्रमेण प्राणश्चक्षुः श्रोत्रं कर्माग्निरिति स एकैक एतावान् भावानसौ पूर्वः ते है ते विद्याचित एव तानेतानेवंविदे सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते विद्यया है वैत एवंविदश्चित्ता भवन्तीति। तत्र संशयः। किं कर्मात्मका अमी अग्नयः किं विद्यामया इति। ज्ञानात्मका इति सिद्धान्तं तावदाह लिङ्गभूयस्त्वाल्लिङ्गं सामर्थ्यं तत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिरिति तान्वैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते सुषुप्ताय चेत्यर्थः। तद्धि लिङ्गं प्रकरणाद्बलीयः। तदप्युक्तं शेषलक्षणे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति पूर्वस्य बलीयस्त्वमुक्तम् ॥ ४४ ॥

अथ पूर्वपक्षः।

## पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥४५॥

पूर्वस्यैव क्रियामयस्येष्टकाभिरग्निं चिन्वत इति विहितस्यायमग्निविकल्पः स्यात्तत्प्रकार इत्यर्थः। यथासौ क्रत्वङ्गं तथायमपीत्यर्थः। कथम्। प्रकरणक्रियामानसवत्। यथा द्वादशाहस्य दशमे ऽहनि पृथिव्याः पात्रेण समुद्ररसनप्राजापत्यं मनोग्रहं गृह्णातीति मानसी क्रिया क्रत्वङ्गमेवमत्रापीत्यर्थः ॥ ४५ ॥

## अतिदेशाच्च ॥ ४६ ॥

इतश्च षट्त्रिंशत्सहस्राण्यग्नयो ऽर्काः तेषामेवैक एव तावान् यावानसौ पूर्व इति क्रियात्वसादृश्यादेवमुक्तम ॥ ४६ ॥

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दात्पक्षव्यावृत्तिरेवकारो ऽवधारणे । विद्यैवेयं मानसी स्वतन्त्रा निर्धारणात् । ते हैते विद्याचित एवेति ॥ ४७ ॥

## दर्शनाच्च ॥ ४८ ॥

इतश्च तान्वैतानेवंविदे सर्वदा सर्वाणि भूतानीति ॥ ४८ ॥

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

न प्रकरणेन लिङ्गादिबाधस्तेषां बलीयस्त्वात् । ते हैते विद्याचित एवेति श्रुतेः सर्वदा सर्वाणीति लिङ्गम् । न ह्यन्यथा-सर्वाणि भूतान्यस्य विचिन्वन्तीति युज्यते । मनोवृत्तिषु तूपपद्यते । षट्त्रिंशत्सहस्राणीति च शतायुः पुरुषस्तत्र शतेषु संवत्सरेषु यावन्त्यहोरात्राणि त्रीणि शतानि षष्टिश्च षष्टिश्चाहोरात्राणि भवन्ति तदीयामहोरात्रसख्यां मनोवृत्तिषु कल्पयित्वैवं व्यपदिश्यते विद्यया हैवैत एवंविदश्चित्ता भवन्तीति प्रमाणत्रयं विद्यामयत्वप्रतिपादकम् । एवं हि ग्रहणं च क्रत्वङ्ग-शङ्कानिरुणद्धि॥ ४९ ॥

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथकत्ववत् दृष्टश्च तदुक्तम् ॥ ५० ॥

इतश्च स्वातन्त्र्यं मनआदिव्यापारेषु क्रियावयवानुबन्धान्मनसैवाधीयन्त मनसा चीयन्त मनसैव ग्रहा गृह्यन्त क्रत्वङ्गत्वे मनस्यारोपणमनर्थकम् । आदिशब्देन पूर्वोक्तातिदेशो व्यपदिश्यते । भेदे सत्यतिदेशो ऽवकल्पते प्रज्ञान्तरपृथक्त्ववत् । यथा शाण्डिल्यविद्याप्रभृतीनि कर्मभ्यो विद्यान्तरेभ्यश्च पृथगवतिष्ठन्ते दृष्टश्चोत्कर्षो ऽवेष्टे राजसूयप्रकरणे पठितायाः । तदुक्तं भेदलक्षणे अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते इति । यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयतीत्यादिवाक्येन ब्राह्मणादिसम्बन्धो ऽवेष्टेर्विधीयते ऽन्नाधफलाय । यथाह श्रुतिरेतयान्नाद्यकामं याजयेदिति ॥ ५० ॥

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लो-
कापत्तिः ॥ ५१ ॥

न मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाङ्गत्वं केवलपुरुषार्थोपलब्धेः। पूर्वस्मिन्मण्डलब्राह्मणसमाप्तौ स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषो ऽयं दक्षिणेक्षन्पुरुषः स एवंविद आत्मा भवति सो ऽमृतो भवति मृत्युर्ह्यस्यात्मा भवतीति। तदेवात्राप्याकाङ्क्षासन्निधियोग्यतावशेन सम्बध्यते। सामान्यफलं चोत्तरत्र श्रूयमाणम्।

विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणायन्ति नाविद्वांसस्तपस्विन इति॥

न हि फलमन्तरेण विधिः समाप्यते। तदुक्तं चतुर्थे श्रुत्येकदेशः स इति। न च मानसग्रहतुल्यत्वात् क्रियाङ्गत्वम्। न हि किञ्चित्सादृश्यं कस्य चिन्नास्ति मृत्युवत्। यथा स एव मृत्युर्य एष एतस्मिन्मण्डले पुरुष इति अग्निर्वै मृत्युरग्न्यादित्यपुरुषयोर्न सादृश्यादेकतापत्तिः। यथा चासौ वा व लोको गौतमाग्निश्चित् इत्यनन्तरे लोकम्पृणाब्राह्मणे ऽग्निरिति न ह्यग्नेर्लोकापत्तिर्लोकस्य चाग्न्यापत्तिः॥ ५१॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५२॥

परस्तादप्ययं वा व लोक एषो ऽग्निचित् इत्यनन्तरे लोकम्पृणाब्राह्मणे ताद्विध्यं विधायित्वं शब्दप्रयोजनं लक्ष्यते। तत्र हि विद्यया तदारोहतीति विद्यामाहात्म्यं दर्शितं तत्सामान्यादिहापि विद्याविधित्वम्। भूयांसो ऽग्न्यवयवाः सम्पातयितव्याः विद्यायामित्येतस्मात्कारणादग्निनानुबध्यते विद्या न कर्माङ्गत्वात्। तस्मान्मनश्चिदादीनां विद्यात्मकमिति॥ ५२॥

एक आत्मनः शरीरे भावात् ॥ ५३ ॥

मनश्चिदादयो विद्याविधयः पुरुषार्था इत्यनन्तरमुक्तं एको ऽसौ पुरुषो यदर्थास्तु परलोकफलविधय इति तत्प्रसाधनार्थमारभ्यते। तत्रात्मनो ऽभावमेके लोकायतिका मन्यन्ते। कुतः।

शरीरे सति चैतन्यस्य भावात् असति चाभावात्तद्धर्मश्चैतन्यं शरीराकारपरिणतेभ्यो भूतेभ्यश्चैतन्यमुत्पद्यते इति। तथा बार्हस्पत्यानि सूत्राणि पृथिव्यप्तेजो वायुरिति तत्त्वानि तत्समुदाये शरीरेन्द्रियविषयसंज्ञा तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवद्विज्ञानामिति ॥ ५३ ॥

अत्राभिधीयते।

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

तुशब्दः प्रक्षव्यावृत्त्यर्थः। न शरीरधर्मश्चैतन्यं तत्रोक्तव्यतिरेकस्तस्याः स धर्मश्चैतन्यमित्यर्थो येन परिणतानि भूतान्युपलभ्यन्ते स तेभ्यो व्यतिरिक्तस्तदुपलब्धावश्यमभ्युपगन्तव्यः। न ह्युपलभ्यो घटादिरेवोपलब्धा। ग्राह्यग्रहीत्रोर्भेदानुभवात्। उपलब्धिवत्। यथोपलब्धादन्योपलब्धिः। सा कस्मादभ्युपेयते। अपरोक्षत्वादेवं चेदुपलब्धाप्यपरोक्ष एव। उपलब्धा उपम्भ उपलब्धिश्च त्रितयं प्रत्यक्षम्। उपलब्धा तावत्स्वयं प्रसिद्धः प्रमाणं प्रमेयं च तत्सापेक्ष्यमचेतनत्वात्। सर्वो हि लोकः स्वमात्मानं प्रत्यभिजानाति जाग्रत्स्वप्नसुषुप्तावस्थात्रयव्यतिरिक्तं सो ऽहमित्यनुसन्धत्ते। यस्त्वमात्मानं निराकरोषि किमहमस्मीति प्रत्येषि किं वा नेति। यदि न प्रत्येषि को वा निराकर्ता। अथ प्रत्येषि त्वमेवासौ निराक्रियमाणस्यात्मत्वात्। न ह्यभावप्रत्ययः प्रमातर्यास्पदं लभते। अभावज्ञानस्यापि प्रमातारमनाश्रित्यानुपपत्तेः। प्रमेये हि घटादावस्ति नास्ति प्रत्ययौ पर्यायेण प्रवर्तेते। न च शरीरधर्मत्वं तद्धर्मवैधर्म्यात्। ये हि शरीरधर्मा रूपादयः तेषां तद्भावभावित्वात्। यावच्छरीरभावित्वात्। मृतशरीरे ऽप्यनुवृत्तेरन्यद्यावच्छरीरभावि चैतन्यम्। धर्मस्य हि द्विधा निवृत्तिराधारविनाशाद्वा विरुद्धधर्मसमादेशाद्वा। यथा श्यामस्य कुम्भस्य रक्तगुणयोगान्निवृत्तिः। ननु चैतन्यं तत्रापि विरुद्धं धर्मान्तरम्। अत्रोच्यते। प्रायेण प्राकृतानां लज्जापरित्यागः पाण्डित्यकारणं सति शरीरे चैतन्याभावः कथमिति पृष्टे स एव चैतन्याभावो हेतुरुपदिश्यते त्वया। न हि साध्य एव हेतुर्भवति। न हि श्यामत्वाभावः श्यामत्व-

निवृत्तौ हेतुः किन्तु गुणान्तरम । न चाचैतन्यं नाम किञ्चिद्गुणान्तरमस्ति । ननु च कार्कश्यादिर्यथा सत्यपि शरीरे अपैति तद्धर्मः सन् । तत्र युक्तं मृदुत्वस्थूलत्वादीनां निवृत्तिहेतुत्वात् किं चक्षुः शरीरसमवायित्वेन प्रतिभासन्ते रूपादयस्ते तद्धर्मा भवन्तु संवेदनसामर्थ्यात् । कदाचिच्चैतन्यतत्समवायित्वेन गृह्यन्ते । चैतन्यविशिष्टे शरीरे ग्राह्ये ऽभ्युपगम्यमाने ऽन्यच्चैतन्यं कल्पयितव्यं गृहीतत्वेन तस्यान्यामित्यनवस्थेति व्यतिरेको बलादापद्यते चैतन्यशरीरं न सम्भवतीति भौतिकत्वात्कुम्भादिवत् । हिताहितप्रवृत्तिनिवृत्त्यसम्भवादचैतन्यं कुम्भादीनामस्मदादिवत् । आगमाच्चोत्क्रान्तिगत्यागतिप्रतिपादनात् व्यतिरिक्तत्वं नित्यत्वं चैवं प्रमाणत्रयसिद्धो ऽस्माकमात्मा । यत्तु शरीरे भावादिति व्यतिरेको ऽसिद्धः शरीराभावे तदभावः हेत्वभावादिति स्थितम् । मदशक्तिवदित्ययुक्तं दृष्टान्ताभिधानं वैधर्म्यात् । अवश्यं कस्य चिच्छक्तिर्भवति बीजस्याङ्कुरशक्तिरग्नेर्दहनशक्तिरिति । यदि शरीरव्यतिरेकेणापरिणतस्य महाभूतस्य परिणतस्य वा चैतन्यशक्तिर्दृश्येत ततो दृष्टान्तो ऽयुक्तस्तदभावात् कायकार्यं चैतन्यमिति प्रतिज्ञामात्रमिति ॥ ५४ ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

ओमित्येतदक्षरमुद्गीथमुपासीत लोकेषु पञ्चविधाः सामोपासीत उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोपमन्थमयं वा व लोक एषो ऽग्निश्चित इत्येवमाद्याः प्रतिशाखासु प्रत्ययं विधीयमानाः व्यवतिष्ठेरन् । येन स्वरादिविशेषेण यस्यां शाखायामुद्गीथादयः पठ्यन्ते तद्विशिष्टा एव भवेयुर्न शाखान्तरगतोद्गीथाद्याश्रयाः सन्निधानादिति प्राप्ते ब्रूमः । उद्गीथाङ्गप्रतिबद्धाः प्रत्यया न प्रति वेदं किन्तु सर्वशाखाविहितास्युर्यस्मादुद्गीथादिश्रुतिरविशिष्टा सन्निधिं बाधते । क्रतुमध्यगताश्चोद्गीथादयः प्रत्ययाश्रया न तत्र सन्निधिविशेषः । सर्वशाखाप्रभवत्वात्क्रतोः ॥ ५५ ॥

## मन्त्रादिवद्वा ऽविरोधः ॥ ५६ ॥

चार्थे वाशब्दः । शाखान्तरविहितो मन्त्रः कुटरुरसीति

शाखान्तरेष्वपेक्षते । कुक्कुटो ऽसीत्यश्मानमादत्ते कुटरुरसीति वेति मैत्रायणीयानां प्रयाजा न सन्ति तथाप्यन्नूर्ध्वगुणविधिर्भवति । समानतन्त्रा होतव्या इत्यादिग्रहणम् ॥ ५६ ॥

## भूम्नः क्रतुवत् ज्यायस्त्वं तथाहि दर्शयति ॥५७॥

वैश्वानरविद्यायां छान्दोग्ये किं समस्तोपासनं कर्तव्यमथ व्यस्तोपासनमपीति। दिवमेव भगवो राजन्निति होवाचेति प्रत्येकश्रुतेः फलसङ्कीर्त्तनाच्च व्यस्तोपासनप्राप्तावुच्यते । भूम्नः समग्रोपासनस्य ज्यायस्त्वं प्रशस्तता प्रमाणवत्त्वम् । कथम् । उपक्रमोपसंहारयोरेकवाक्यत्वात् । यथा वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते इति । मूर्द्धा ते व्यपतिष्यदिति दोषदर्शनात् क्रतुवत् । यथा पौर्णमासादीनां साङ्गानामेकः प्रयोगः फलाय श्रुतिश्च भवति यथा न्याय उक्तो ऽस्माभिः । तथा व्यस्तोपासनं व्यावर्त्य समग्रोपासनत्वमेवानुकृष्य स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्तीति ॥ ५७ ॥

## नाना शब्दादिभेदात् ॥ ५८ ॥

शाण्डिल्यविद्यादीनामपि समुच्चित्योपासनं ज्यायो ऽनन्तरन्यायेन। यथा चाग्निहोत्रादीनां समुच्चित्य प्रयोगस्तथात्रापीति प्राप्त उच्यते। नानेति । भेदेनोपासनं कर्तव्यं न समुच्चित्य । प्रतिप्रकरणमुपासनाविधीनामन्योन्यनिराकाङ्क्षत्वात् । कथम् । शब्दादिभेदात् । शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणानि कर्मभेदप्रमाणानि भेदलक्षणे दर्शितानि तैरेवात्रापि भेदसिद्धिर्भेदोपासीत स क्रतुं कुर्वीतेति स्वरूपाभेदे ऽपि विधेयस्य पुरुषप्रययस्य गुणफलानुबन्धात्तत्स्वरूपं भिद्यते । यथेष्टिपशुसोमादीनाम् ॥ ५८ ॥

## विकल्पो ऽविशिष्टफलत्वात् ॥ ५९ ॥

किमासु विद्यासु फलार्थिनां समुच्चयेन प्रयोगो ऽग्निहोत्रादिवदथवा विकल्पित इति। समुच्चयोऽग्निहोत्रादिवदिति पूर्वः पक्षः। विकल्प इति सिद्धान्तः । कस्मात् । अविशिष्टफलत्वात् । अपवर्गप्राप्तिरेकफलमेकार्थास्तु विकल्पेरन्निति न्यायात् । यथा

व्रीहियवयोरेकं कार्यमन्योन्यनिरपेक्षसाधनभावोपदेशाद्विकल्पस्तद्वदत्रापीति ॥ ५९ ॥

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥

प्रत्युदाहरणसूत्रम्। स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदनं रोदितीति। काम्यास्तु यथा कामं यथाफलं यावन्ति फलानि प्रार्थयते तत्प्राप्तये समुच्चेतव्याः यद्येकफलमिच्छति तदैकमेव कुर्यादित्यनियमः। पूर्वोक्तहेत्वभावादिति ॥ ६० ॥

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

कस्याङ्गेषूद्गीथादिषु यथाश्रयभावः प्रत्ययानां तेन तेन वेदेन विहितानां यथाश्रयस्तोत्रशस्त्रादयो नित्यास्तथाश्रिता इत्यर्थः ॥ ६१ ॥

शिष्टेश्च ॥ ६२ ॥

इतश्च यथा स्तोत्रादीनां शिष्टिः शासनं विधानं तथा प्रत्ययानाम् ॥ ६२ ॥

समाहारात् ॥ ६३ ॥

होतृषदनाद्धैवाऽपि दुरुद्गीथमनु समाहरतीति यः प्रणवः स उद्गीथ इत्येकत्वविज्ञानसामर्थ्यादुद्गाता स्तोत्रवैगुण्यसमुत्पन्नं होतृकर्मणः शंसनात्समादधातीति समुच्चयं दर्शयति ॥ ६३ ॥

गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

इतश्च। विद्यागुणस्योङ्कारस्य वेदत्रयसाधारण्यश्रवणात्। ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायतीति तदाश्रितस्य प्रत्ययस्य साधारण्यमित्यभिप्रायः। ननु पुनरुक्तमेतन्निरस्तो- नियतो ऽङ्गभावः पृथग्घ्यः प्रतिबन्धः फलमिति। अत्रोच्यते तदेवाक्षिप्यते। कथमाश्रयासम्बन्धस्यावश्यं विधेयत्वात्। अन्यथा बहिरपि प्रयोगः स्यात्। ततश्च प्रयोगवचनेनाश्रयवदाश्रितस्यो-

पादानान्नित्यप्रयोगे यस्य ऋत्विजो यदुपासनमुक्तं तत्तेन कर्तव्यम् । अज्ञातरवत् प्रयोगवचनोपादानविशेषात् । यथा यस्यपर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्याश्रयसम्बन्धो ऽवश्यम्भावीति क्रत्वर्थता । अत्र वाक्यान्तरेण श्रद्धयोपनिषदेति फलस्य विधानात्तदपि भवतीत्युच्यते । नाश्रयसम्बन्धो ऽत्र विधातव्यः प्रयुज्यमानोद्गीथाद्युद्देशेन मनोवृत्तिमात्रविधानात्, । न चोद्गीथादयः क्रतोर्बहिर्विद्यन्ते नैमित्तिकत्वात् अध्वर्य्वादिवत् । अधिकृताधिकारित्वसिद्धं गोदोहनादिवत् । तथा तत्राप्प्रणयनमाश्रित्य गोदोहनं फलं साधयति प्रणयतिशब्दोपादानसामर्थ्यादाश्रयत्वसिद्धेरेवमत्रापि । पर्णमयी वाक्ये तु जुहूसम्बन्धस्यावश्यंभावित्वात्तत्सम्बद्धापूर्वं विधातव्यमिति फलश्रुतेरर्थवादः । अन्यथा वाक्यभेदप्रसङ्गात् । इह तु वाक्यान्तरे स्ववाक्ये वा यत्फलमुक्तं तदेवमुक्तमन्तरङ्गत्वाद्नारभ्याधीतत्वाच्चेति तदेव स्थितं पृथक्प्रातिबन्धः फलमिति ॥ ६४ ॥

तदेतदुच्यते—

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

न वेति व्यावृत्तिः । न प्रत्ययानां क्रत्वर्थत्वात् स्वाङ्गानामुपसंहारं करोति ज्योतिष्टोमादिविधिः पुरुषार्थास्तु प्रत्यया इति वैषम्यम् । अत एवावश्यं कर्तव्यताभावात् प्रत्ययाः कल्पसूत्रकारैर्न निबद्धाः ॥ ६५ ॥

दर्शनाच्च ॥ ६६ ॥

इतश्च प्रत्ययानामसहभावो दर्शनादेवंविदहं ब्रह्म यज्ञं यजमानं सर्वांश्चर्त्विजो ऽभिरक्षतीति ब्रह्मणो विद्वत्तया सर्वेषां पालनं ब्रुवन्प्रत्ययनित्यतां दर्शयति ॥ ६६ ॥

इति भास्करीयब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य
तृतीयः पादः समाप्तः ॥

# अथ तृतीयाध्यायस्य चतुर्थः पादः ।

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

पुरुषस्य प्रयोजनं ब्रह्मप्राप्तिरतो ब्रह्मज्ञानात् । कुतः । प्रमाणात् । शब्दात् । इति शब्दोऽवधारणार्थः । सम्यग्ज्ञानं पुरुषार्थमेव न तत् क्रत्वर्थमिति भगवान् बादरायणो मन्यते ऽस्म । कः पुनः शब्दः । तरति शोकमात्मवित् स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मविदाप्नोति परं सर्वांश्च लोकानाप्नोतीति । अपूर्वः पक्षः प्रारभ्यते । यद्येवं किमर्थः सिद्धान्तोपक्रमः किं वात्र प्रतिपाद्यमिति वक्तव्यम् । उच्यते । सर्वत्र सिद्धान्तोपक्रमस्य द्वयी गतिः पूर्वपक्षविषयज्ञानार्थं तस्य वा दौर्बल्यप्रकटनार्थं सिद्धान्तहेतुं ज्ञात्वा तन्निरासेन प्रत्यवस्थानोपपत्तेः । आत्मज्ञानं कर्माङ्गप्रत्ययश्रवणं च स्तुतिमात्रैकाश्रम्यं श्रौतमाश्रमान्तरं स्मार्तं विकलेन्द्रियादिविषये चरितार्थमिति मामांसकमतं तदत्र निरस्यते । स्थिते ऽस्मिन्पुरुषार्थे ज्ञाने कर्मसमुच्चितता ततः सिद्धिरिति यज्ञादिश्रुतेरश्ववदित्यत्र वक्ष्यति । तदेतदधिकरणतात्पर्यम् । अन्ये केवलादेव ज्ञानादत्रैव पुरुषार्थसिद्धिः प्रतिपाद्यत इति मन्यन्ते तात्पर्यापरिज्ञानात् ॥ १ ॥

शेषत्वात्पुरुषार्थवादो यथा ऽन्येष्विति जैमिनिः ॥ २ ॥

कर्मशेषत्वात् कर्तुरात्मनः तत्सद्भावनाज्ञापनेनोपनिषदां कर्मोपयोगित्वम् । लौकिके पुनर्व्यवहारो नास्ति तत्सद्भावायोगः सर्वथोपपत्तेः फलश्रुतिरर्थवादः । यथा यस्य पर्णमयी

जुहूर्भवति न स पापं श्लोकं शृणोति यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजा इज्यन्ते वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै इति जैमिनिराचार्यो मन्यते स्म ॥ २ ॥

आचारदर्शनात् ॥ ३ ॥

ब्रह्मविदामप्याचारदर्शनात् । जनको ह वैदेहो बहुदक्षिणेन यजते ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥

कर्मशेषत्वश्रवणात् । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति ॥ ४ ॥

समन्वारम्भणात् ॥ ५ ॥

ते विद्याकर्मणी समन्वारभेते इति ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥

विद्यावतः कर्मविधानात् । आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य स्वे कुटुम्बे शुचौ देशे स्वाध्यायमधीयान इति । अर्थावबोधपर्यन्तः स्वाध्यायविधिरिति स्थापितम् ॥ ६ ॥

नियमाच्च ॥ ७ ॥

इतश्च कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः यावज्जीवमग्निहोत्रं जुहुयादिति ॥ ७ ॥

अथ सिद्धान्तः ।

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुशब्दः पक्षव्यावृत्त्यर्थः । कर्तृभोक्तृत्वरूपात्संसारिणो जीवादधिकोऽसंसारी ईश्वरः समस्तप्रपञ्चधर्मरहितोऽद्वितीयः सत्यज्ञानानन्तलक्षणस्तस्य सर्ववेदान्तेषूपदेशात् । तज्ज्ञानस्य कर्मानुपयोगात् प्रकरणाद्यभावाच्च कर्माङ्गत्वं कल्पयितुमशक्यम् प्रयाजवत् । आत्मज्ञानं तु स्वप्रकरणगतैनैव

निराकाङ्क्षं नान्यशेषत्वं प्रतिपद्यते । स्थितमेवं पुरुषार्थोऽत इति बादरायणस्य मतं तद्दर्शनात् । यः सर्वज्ञः सर्वविदिति ॥ ८ ॥

तुल्यं तु दर्शनम् ॥ ९ ॥

अकर्माङ्गत्वेऽप्यस्तीत्यर्थः । एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेया किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामह । एवं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थायाथ भिक्षाचार्यं चरन्तीति । किमर्था वयमिति संहिता विज्ञानस्तुत्यर्थं नाध्ययनादित्यागविधानम् । सर्वथा ज्ञानस्य प्राधान्यमभिप्रेतम् ॥ ९ ॥

असार्वत्रिकी ॥ १० ॥

यदेव विद्ययेति श्रुतिः सर्वत्र न भवत्युद्गीथसम्बन्धात् । उद्गीथोपासनायाः कर्माङ्गत्वमिष्टमेव ॥ १० ॥

विभागः शतवत् ॥ ११ ॥

विद्यान्यमारभते कर्मान्यमिति विभागः । तथाप्यनङ्गत्वमात्रविवक्षयोन्यस्तमिदं द्रष्टव्यम ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥

अध्ययनतदाक्षिप्तकर्मज्ञानवतोऽध्ययनस्य ज्ञानार्थत्वात् तेन च कर्माधिकारोपपत्तेः कर्माङ्गं नात्मज्ञानमित्यभिप्रायः ॥ १२ ॥

नाविशेषात् ॥ १३ ॥

विदुषोऽध्ययनस्य ज्ञानार्थत्वात् तेन च कर्माधिकारोपपत्तेः विदुषोऽविदुषश्चाविशेषात् कुर्वन्नेवेति ॥ १३ ॥

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

पूर्वत्रापरितोषात् परिहारान्तरं प्रकरणात् । विद्यास्तुतयेऽनुमतिः कर्मानुज्ञा क्रियते न कर्म लिप्यते नर इत्यनेना-

भिसम्बन्धात् । ज्ञानस्यैतत्सामर्थ्यं यत् जीवे कर्मकुर्वेति विदुषि न लेपो भवतीति ॥ १४ ॥

## कामकारेण चैके ॥ १५ ॥

अपि चैके शाखिनो विदुषामिच्छानुरोधेन प्रजादिपरित्यागमामनन्ति किं प्रजया करिष्यामो येषां नो ऽयमात्मायं लोक इति विद्याप्राधान्यं दर्शयति ॥ १५ ॥

## उपमर्दञ्च ॥ १६ ॥

यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदिति आत्मस्वरूपस्थस्य विषयेन्द्रियजसमस्तसांसारिकक्लेशोपमर्दमामनन्तीत्यर्थः। अतो न कर्माङ्गम् ॥ १६ ॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

इतश्च विद्यायाः स्वातन्त्र्यं नाग्निहोत्राङ्गता । कथम् । ऊर्ध्वरेतस्सु निवृत्तग्राम्यधर्मेष्वाश्रमेषु श्रूयते यतस्ते चाश्रमवादिके शब्दे दृश्यन्ते । त्रयो धर्मस्कन्धा ये चेमे ऽरण्ये श्रद्धा तप इत्युपासते एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति ॥ १७ ॥

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

त्रयो धर्मस्कन्धा इति प्रसिद्धानामाश्रमाणां सामोपासनविधिप्रकरणे तायमाने ततो ऽपकृष्य स्वतन्त्रस्य प्रणवोपासनस्य स्तुत्यर्थं परामर्शमनुवादं जैमिनिराचार्यो मेने न तेषां विधानम् । कस्मादचोदनाद्विधायकशब्दाभावात् । अपि चापवदति वीरहा एष देवानां यो ऽग्निमुद्वासयते आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीरिति ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते स्म । गार्हपत्येन तुल्यश्रवणादाश्रमान्तरस्य । त्रयो धर्मस्कन्धा इत्यनुवादाच्च स्मृतीनां श्रुतिमूलत्वं सिद्धम् । १९ ॥

## विधिर्वा धारणवत् ॥ २० ॥

अथवा न परामर्शमात्रमाश्रमान्तराणां किं तर्हि विधिः। कस्मात्। पुनः श्रवणे चैकवाक्यतां भित्त्वा विधिरुपगम्यते अन्यतः प्राप्त्यसम्भवात् धारणवत्। यथा दिष्टं गताग्निहोत्रे श्रूयते। अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति भित्त्वा वाक्यमुपरि धारणमपूर्वत्वाद्विधीयते। तदुक्तं शेष लक्षणे विधिस्तु धारणमपूर्वत्वादिति। निवीताधिकरणप्रदेशे ऽनुवादो विधिर्वास्तु सर्वथा सन्त्याश्रमाणि श्रुत्यनुज्ञातानि नैकाश्रम्यतेत्यभिप्रायः न पुनर्वाक्यभेद एवैकान्तेन विवक्षित इति केचित्। अत्राहुः। ब्रह्मसंस्थ इति परिव्राजको निर्दिश्यते पारिशेष्यात्। त्रय एवेत्यत्र वैखानसो गृह्यते तस्य तपः प्राधान्यात् न भिक्षुरतः पारिशेष्योपपत्तिः। सर्व एते पुण्यलोके भवन्तीति च विरोधात् पुण्यलोकाश्चामृतभाजश्चेति। न हि भवति देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ तयोरन्यतरो महाप्राज्ञ इति। अत्रान्ये प्रति ब्रुवते। नायं रूढशब्दो ब्रह्मसंस्थ इति यौगिको ऽयं ब्रह्मणि संस्था यस्येति। जातिशब्दो गुणशब्दो यौगिको वा सन्निहितं विशेषं नातिवर्त्तते। यथा गामानय पथिकाय वेतनं देहीति। स्थितश्चाग्नेयाधिकरणे अयं न्याय आग्नेय्याग्नीध्रमुपतिष्ठत इत्यत्र। यदि परिव्राजकः तपः शब्देन सन्निधापितस्ततस्तस्येह ग्रहण नार्थेन तस्यामृतत्वाशासुतरां भिक्षुः तपः प्रधानो ऽष्टग्रासशौचातिरेकादिनियमात्। भवति च सामान्येनोभयव्यपदेशो यथोद्भिज्जामिति स्वेदजस्यापि। ब्रह्मसंस्थता च ब्रह्मनिष्ठोच्यते सा च सर्वाश्रमाणामविशिष्टा। न चोङ्कारालम्बनं ब्रह्मानुचिन्तनमितरेषामशक्यमिति शक्यं कर्तुम्। ननु तेषां कर्मप्रधानत्वादशक्यमिहोच्यते। किमिदं प्राधान्यम्। न तावत्कर्मात्मानं लभतामिति तदनुष्ठीयते किन्तु पुरषार्थतया। तथोक्तं कर्माण्यपि जैमिनिः फलार्थत्वादिति। पुरुषस्य चार्थः स्वर्गो ऽपवर्गो वा। अपवर्गार्थी तदीयं कर्म तदर्थमेव ब्रह्मार्पणन्यायेन क्रियमाणं भवति। अत एव ज्ञानकर्मणोरेकप्रयोजनत्वादविरोधः। तथा

चाह स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयत इति। स्वतः क्षणिकमपि अक्षयफलत्वादक्षयमुच्यते । यदि च कर्मसम्बन्धमात्रेणामृतत्वं नास्तीत्युच्यते परिव्राजकस्यापि न स्यात् । तस्यापि शौचाचमनस्नानभिक्षाटनादिकर्म कायिकं वाचिकं मानसं तच्चापरिहार्यं ध्रियमाणशरीरस्येति न कस्य चिन्मुक्तिः स्यात् । तस्मात्सर्वेषां यथायोगं ब्रह्मनिष्ठतात्पर्यं तन्निष्ठतोच्यते न व्यापारान्तरोपरमम् । यथा स्वाध्यायनिष्ठः तपोनिष्ठ इति । यदुक्तं विरोधादिति । तदयुक्तम् । अवस्थान्तरापेक्षया अविरोधात् । केवलकर्मिणः पुण्यलोकास्त एव ब्रह्मसंस्था अमृतत्वभागिन इति । दृष्टान्ते ऽप्यविरोध एव । कथम् । यदि तावन्महाप्रज्ञतान्यतरस्य विधीयते तत्रैव वचनव्यक्तिर्मन्दप्रज्ञौ तावुभौ तयोरन्यतरः शास्त्रस्थो महाप्राज्ञः स्यात् । अथवानुवादः पूर्वं मन्दप्रज्ञावभूतामिदानीमन्यतरो महाप्राज्ञो वक्ता इति कालभेदादविरोधः । अवश्यं चाश्रमकर्म यतिनापि कर्त्तव्यमन्यथा प्रत्यवायात् । सर्वकर्मत्यागस्य च मिथ्यासङ्कल्पत्वात् । यच्च तैत्तिरीयके वचनं न्यासमेवापरे ऽवक्षादिति । तत्र न्यास इति ब्रह्मेति निर्वचनात् ब्रह्माभिधीयते न कर्मत्यागः । तस्य ब्रह्मणः सर्वतपसां परत्वं युज्यते तत्प्राप्यत्वात् ॥ २० ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

स एष रसानां रसतमः परार्ध्यो ऽष्टमो यदुद्गीथ इत्येवमादि स्तुतिमात्रमुद्गीथाद्युपादानात् । कर्माङ्गभूतानामुद्गीथादीनामुपादानं कृत्वा तेषां स्तुतिमात्रं क्रियते नोपासनाशेषत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु नापूर्वत्वान्नेति पूर्वपक्षनिवृत्तिः । अप्राप्तत्वाद्विधिरेव । न च प्रदेशान्तरविहितस्योद्गीथस्य प्रदेशान्तरे स्तुतिरुपयुज्यते । विधायकस्य पदसमूहस्यानन्तरं पुरस्तात्परस्ताद्वा समाम्नातो ऽर्थवादस्तेनैकवाक्यतामेति यथा वायुर्वै क्षेपिष्ठेति । तदुक्तं विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरिति ॥ २१ ॥

## भावशब्दाच्च ॥ २२ ॥

इतश्चोद्गीथमुपासीत सामोपासीतेति विधिशब्दात् ॥ २२ ॥

पारिप्लवार्थ इति चेन्न विशेषितत्वात् ॥ २३ ॥

तथा चैकवाक्योपबन्धात् ॥ २४ ॥(१)

यथा च सो ऽरोदीदिति एवमादीनां विधिनैकवाक्यत्वादर्थवादश्च तथा द्रष्टव्य इत्यादिविध्येकवाक्यसम्बन्धात्तत्प्रशंसार्थमाख्यानम्। एवं तत्सान्निधौ तत्र तत्र समाम्नातमर्थवद्भवति ॥ २४ ॥

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

विधिस्तुतिबिचाराधिकारविप्रमोक्षायानन्तरमाधिकरणद्वयं चिन्तितं तदतीत्य व्यवहितेन सम्बन्धो यस्मादूर्ध्वरेतस आश्रमाः श्रुतिपरिगृहीताः सन्ति अत एवाग्नीन्धनाद्यनपेक्षा विद्याभविष्यति। अन्यथा ऐकाश्रम्यपक्षे गृहस्थस्यैव तत्कर्मसापेक्षैव स्यात् ॥ २५ ॥

यद्येवं केवला तर्हि विद्या पुरुषार्थं साधयेन्न कर्मात आह।

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

सर्वेष्वाश्रमवत्सु अपेक्षा सा सर्वापेक्षा। कुतः। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति श्रुतेर्ज्ञानं प्रत्यपवर्गसिद्धौ यज्ञादयस्तृतीयया विभक्त्याङ्गत्वेन प्रयाजादिवद्विधीयन्ते। अपूर्वत्वाच्च विधिरयं दध्ना जुहोतीति। सन्वाच्यायाश्चेच्छायाः प्रकृत्यर्थं प्रत्युपसर्जनत्वाद्वेदनं प्रधानमीप्सिततमत्वात्। इष्टतमत्वं च ज्ञानस्यापवर्गक्षमत्वादपवर्गक्षमं च परिपक्वनिरवशेषाविद्यानिवर्तकमुदितादिनकरवत्। न च ज्ञानस्वरूपोत्पत्तौ कर्म व्याप्रियते। श्रवणमननादि तदुत्पत्तिकारकम। तस्माद्यथैव शमादयो यावज्जीवमनुवर्तन्ते विदुषामपवर्गप्राप्तये तथाश्रमकर्माणीति नान्तराले परित्यागः। यत्पुनः कैश्चिदुच्यते पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती-

(१) शाङ्करभाष्यानुसारेण सूत्रभेदः। अत्र ग्रन्थे त्वेकसूत्रत्वम्।

ति सर्वकर्मत्यागवादिनी श्रुतिरिति । तदसत् । पुत्रादिलिङ्गाद्गार्हस्थाद्व्युत्थायाश्रमान्तरं प्रतिपद्यन्तं इति स्मृतिप्राप्तमेवानूद्यते । स्मृत्यनपेक्षत्वे तु शाक्यक्षपणादिभिक्षाचरणमपि श्रौतं प्रसज्येत । स्मृतौ च मननादौ त्रिदण्डयज्ञोपवीतादिनियमादुत्तमाश्रमः स्वरूपतो धर्मतश्च निर्ज्ञात इति नातिप्रसङ्गः । यदप्युच्यते श्वेताश्वतराणां मन्त्रः तपः प्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमिति त्यक्तसर्वकर्मणां केवलादेवज्ञानादपवर्गं दर्शयतीति । तदप्यसत् । मन्त्रार्थापरिज्ञानात् । यदि तावदाश्रमानतिक्रम्य ये वर्त्तन्ते तेऽत्याश्रमिण एव प्रसज्यन्ते तदा न तेषां योग्यत्वं प्रायश्चित्तभाक्त्वात् । अथोत्पन्नज्ञानास्तदा प्रोवाचेति विरुद्धम् । तस्मादतिसुपूजितार्थादिति निरुक्तकारवचनात् पूजिताश्रमिणो वृत्तस्वाध्यायसम्पन्ना निर्दिश्यन्ते तेभ्यः प्रोवाचेति मन्त्रार्थः । तथा च ।

वेदान्ते परमं गुह्यं पुराकल्पप्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्राशिष्याय वा पुनः ॥

पुत्रशिष्यातिरिक्तेभ्यो न दातव्यमिति नियमयन् एतमेवार्थं दर्शयति । या तु जाबालश्रुतिरुदाह्रियते । ब्रह्मचर्य्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति । अथ पुनरेव व्रती वा स्नातको वाऽस्नातको वा उत्पन्नाग्निको वा नासावप्रमाणी क्रियते स्मृतिभाष्यकारैरुदाहृतत्वात् । त्रिदण्डपक्षे ऽप्युपपन्नत्वात् । अत्रापि कर्मत्यागो नास्ति । न हि प्रव्रजितशब्दस्त्यागार्थोऽर्थान्तरे रूढत्वात् । यत्पुनरत्र यज्ञोपवीती कथं ब्राह्मणः स्यादिति पठ्यते तत्सन्दिग्धं पुरस्ताच्चोपवीतन्यासत्यागयोरभावात् । कथमकस्मादेवमाशङ्कावचनमुत्तिष्ठेत । ब्राह्मणं चानर्थकम् । क्षत्रियादिरपि कथमयं यज्ञोपवीती स्यात् । अतिदुर्विदग्धेन केनापीदं वाक्यं प्रक्षिप्तमित्याशङ्कामहे । तस्मान्न स्मृतौ क्वचित् कर्म तत्साधनत्यागाशा कर्तव्येति व्यामोहमूलेयं स्मृतिः । यथा प्रधानं जगत्कारणमिति ज्ञानमपस्मृतिः । तथा तेषामेव सांख्यादीनां सर्वक-

र्मापवादेन स्नानादेव केवलादपवर्ग इत्यपस्मृतिस्तामनुसरन्तो ये ऽपि कर्मत्यागं वर्णयन्ति ते ऽप्यपसिद्धान्तिन एव। तथा चापस्तम्बेनोपन्यस्य निरस्तं तच्छास्त्रैर्विप्रतिषिद्धं बुद्धौ च क्षेमप्रापणमिहैव न दुःखमुपलभेतेति । न च विरोधात्कर्मत्यागः । अविरोधस्य दर्शितत्वात् । अपि च भेददर्शनोपगमात् कर्मत्यागाच्च मुक्तिमिच्छतो मुक्तिरेव न सिध्येत ध्रियमाणशरीरस्योभयोरवश्यम्भावित्वात् । यदि च सर्वं त्यक्तं कथं शौचाचमनभिक्षाटनादिषु प्रवृत्तिः स्ववचनविरुद्धमेतत् त्यक्तं कर्म क्रियते चेति । कस्य वा हेतोः शौचं स्नानं वा । शरीरधारणार्थं च भिक्षाटनमनर्थकम् । ब्रह्मीभूतश्चेद्भवान् वरं तस्य त्यागः स्वातन्त्र्यात् । को हि नाम स्वतन्त्रः सन् कुणपं स्कन्धे वहेत् । क्षुत्पिपासयोश्च निवृत्तत्वात् । अनिवृत्तौ ब्रह्मभावानुपपत्तेः । न हि ब्रह्मणो ऽशनायादियोगो अशनायापिपासे शोकं मोहं जरां मृत्युमत्यतीति श्रुतेः । अत एव वाक्यादर्थज्ञानमात्रान्न सांसारिकसमस्तनिवृत्तिभावो ऽवगम्यते यावदुपासना न क्रियते क्लेशबीजप्रदाहो नोपपद्यते । तथा च व्यासः ।

बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथाक्लेशैर्नात्मा सम्बध्यते पुनरिति ॥

इदं चात्र वक्तव्यं केन प्रकारेण विद्यापवर्गोपयोगिनी । स्यान्मतं भेदज्ञानमविद्या तन्निवृत्त्येति । तदसत् । शब्दविरोधात्(१) । न हि वाक्यार्थज्ञानोत्पत्तौ कस्य चित्कृत्स्नं द्वैतज्ञानं निवर्त्तते ध्रियमाणशरीरस्य शरीरेन्द्रियमनांसि रूपादिज्ञाननिमित्तानि न हि निमित्ते सति नैमितिकं नोत्पद्यते यथाग्नीन्धनसंयोगे धूमः । आरब्धफलसामर्थ्याच्छरीरं वर्त्तते भोगार्थत्वात् । यदि च भेदप्रतिभासो नास्ति पारमेश्वराश्च गुणाः सर्वज्ञत्वादयः प्रादुर्भूता ततो लौकिकं वैदिकं वा कर्मयुगपन्निवर्त्तते । तत्रार्द्धजरतीयं न लभ्यते ।

भ्रान्त्या चेल्लौकिकं कर्म वैदिकं तु यथास्तुते ।
विद्यापनीतत्वाच्च कुतो ऽधुना भ्रान्तिसम्भवः ॥

---

(१) दृष्टविरोधादिति—पा० २ पु० ।

तस्माद्यावदिदं मे शरीरमिति कर्मनिबन्धनावृत्तिरनुवर्त्तते तावदाश्रमकर्मानुवृत्तिरशक्या निवारयितुं शास्त्रशरणेन तिष्ठता । कथं पुनरात्मनः कर्तृत्वं शुद्धचैतन्यस्वभावत्वात् । यथा तव लौकिके कर्मणि । किञ्चौपाधिकमिदं कर्तृत्वं यावदुपाध्यनुवर्तते । यथेन्धनसंयोगे वह्नेर्धूमकर्तृत्वं आरब्धकर्माविनाशाच्च कर्तृभोक्तृत्वे यावच्छरीरभाविनी । विशेषस्त्वयं विद्वदविदुषोर्नौपाधिकं कर्तृत्वं मन्यते विद्वानितरस्तु स्वाभाविकमिति । यदि च जीवन्नेव मुक्तो भवान् । सर्वज्ञत्वात्पराचित्तवेदनमपि प्राप्नोति । ननु सर्वश्चासौ ज्ञश्चेति विग्रहः । मैवम् । त्वत्पक्षे सर्वस्य निवृत्तत्वात् चैतन्यमात्रमवशिष्यते तत्र निःसम्बन्धो मोक्षो ऽभ्युपेयः श्रुत्यनुसारित्वाद्वा सर्वज्ञत्वं सर्वशक्तित्वं चेति । अतो जीवदवस्थायां न मोक्षो मुक्त्युपायभूतं ज्ञानं कर्म चानुष्ठेयम् । कथं पुनः कर्मणो मुक्त्युपायत्वम् । यथैव ज्ञानस्य तव । ननु ज्ञानमविद्यां निवर्त्तयति । सत्यम् । न भेदज्ञानं निवर्त्तयतीत्युक्तम् । अनात्मन्यात्मज्ञानं प्रतिबन्धकं निवर्त्तयतीति चेत्तथा कर्माथ ज्ञानमित्तं धर्मं धर्मेण पापमपनुदतीति श्रुतेः महारजनादिरूपाणां चात्मानं धूपयित्वा स्थितानामपकर्षणं ज्ञानकर्मभ्यां शास्त्रलभ्यत्वादपुनर्भावस्य । केन द्वारेणोपकरोतीति चेत् को जानीयात् मातृतुल्या श्रुतिरेव चेति । तथा हि कुर्वन्नेवेह क्रियावानिति च समुच्चयं विधत्ते । न चात्मरतिरेव क्रियते शक्यते वक्तुं क्रियान्तरोपलब्धेः । न च बहुव्रीहिनिर्देश आत्मरतिः क्रिया यस्य सोऽयमात्मरतिक्रिय इति । बहुव्रीहिणा मतुबर्थस्योक्तत्वात् क्रियावानिति मतुप्सम्बन्धानुपपत्तेः । अश्ववदिति योग्यतानिदर्शनम् । पुरुषग्रहणादौ योग्यो ऽश्वो न लाङ्गलकर्मणि एवं कर्मसहिता विद्या ऽपवर्गप्रापणयोग्येति ॥ २६ ॥

शमदमाद्युपेतः स्यात्तथापि तु विधेस्तदङ्गतया
तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

यज्ञाङ्गत्वे ऽपि शमदमाद्युपेतः स्यात् । कस्मात् । तद्विधेः शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदिति तेषामवश्यानुष्ठेयत्वात् इदमन्तरङ्गसाधनं कर्मवाक्यमिति विवेकः॥२७॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

प्राणसंवादे श्रूयते न ह वा एवंविदि किञ्चनानन्नं भवतीति । शमादिवत् प्राणाद्यङ्गतया सर्वान्नभक्षणं विधीयते किं वा स्तुत्यर्थं कीर्त्यत इति संशयः । विधिसम्भवे स्तुतिमात्रमनर्थमिति प्राप्त उच्यते । स्तुतिरियं वर्तमानापदेशात् । न स पापं श्लोकं शृणोतीति वत् । न चाश्रुतविधिकल्पने निमित्तमस्ति । सर्वशरीरवर्तिनः प्राणस्य सर्वमन्नमिति दृष्टिर्विधीयते । न चाश्वादिमर्यादमन्नं मानुष्येण शरीरेण उपभोक्तुं शक्यम् । अतः स्तुतिमात्रम् । तदिदमाह सर्वान्नानुमतिश्च प्राणात्यये । अनुमतिरनुज्ञानं कष्टायामापदि दर्शनात् अत्यये सति भक्षणदर्शनाच्चाक्रायणऋषिरिभ्योच्छिष्टभक्षणं कृतवानिति ॥ २८ ॥

## अबाधाच्च ॥ २९ ॥

इतश्चाहारशुद्धौ सत्त्वशुद्धिरित्यबाधात् ॥ २९ ॥

## अपि च स्मर्य्यते ॥ ३० ॥

जीवितात्ययमापन्नो यो ऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति ॥ ३० ॥

## शब्दश्चातो ऽकामकारे ॥ ३१ ॥

अकामकारे यथेष्टाचरणनिवृत्तौ कठसंहितायां शब्दो ऽत एव हेतोरुपपद्यते अबाधात् । तस्माद्ब्राह्मणः सुरां न पिबेदिति ॥ ३१ ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

यज्ञादिश्रुतेरिति विद्याङ्गं कर्मेत्युक्तम् । ये पुनरपवर्गार्थिनो न भवन्त्याश्रमास्तेषां तर्हि त्वाश्रमकर्म न प्राप्नोतीत्याशङ्कायामाह तेषामप्याश्रमकर्म स्यात् । विहितत्वात् । अभ्युदार्थं ते ऽपि कुर्युः प्रत्यवायपरिहाराय सर्व एते पुण्यश्लोका भवन्तीति । केचित् तस्मिन् सूत्रे गृहस्थस्य ब्रह्मार्पणन्यायेन काम्यानि कर्माणि कर्त्तव्यानीति प्रतिपाद्यत इति वदन्ति । तद्युक्तमयुक्तमिति चिन्त्यम् ॥ ३२ ॥

## सहकारित्वेन च ॥ ३३ ॥

यद्येवमाश्रमधर्मतया कर्त्तव्यानि पुरुषार्थाय न तर्हि विद्योपयोगित्वं नेत्युच्यते । विद्यासहकारित्वेन च तदधिकृतेन कर्त्तव्यानि । सहकारित्वं च विविदिषन्तीत्यत्र व्याख्यातं पुरुषार्थानि च विद्यार्थानि च कर्माणि । कथम् । विनियोगभेदादेकस्य तूभयत्वे संयोगपृथक्त्वमिति न्यायात् । यथा दध्ना जुहोति क्रत्वर्थो विनियोगो दध्नेन्द्रियकामस्य जुहुयादिति पुरुषार्थस्तद्वत् ॥ ३३ ॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथा पुरुषार्थतया विद्यार्थतया वा क्रियमाणा यागादयः त एव । कथमुभयलिङ्गात् । यज्ञेन दानेनेति कर्मकाण्डे विहितमेव कर्मरूपमुपादाय ज्ञानसहकारित्वेनोपादीयमानत्वात् तदेव कर्म प्रत्यभिज्ञायते । स्मृतिकारैश्च सिद्धवदुपादायाग्निहोत्रदर्शपौर्णमासादीनां पुरुषधर्मतया विनियोगात् । त एवेत्यवधारयन्नाचार्यः कर्मान्तरबुद्धिं निवर्त्तयति । यथा कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति होमान्तरं तद्वदिह न भवति । ततश्च तन्त्रसिद्धिः विद्यार्थमपि क्रियमाणं कर्म नित्यार्थमपि भवति । कर्मान्तरत्वे त्वावृत्तिः स्यादिति कर्त्तव्यता वा ऽन्या ऽन्वेष्टव्येति ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३५ ॥

रागादिभिरबाध्यत्वमेष ह्यात्मा न नश्यति यं ब्रह्मचर्य्येणानुविदतीति ब्रह्मचर्य्ययज्ञादिसहितमात्मज्ञानं नश्यतीत्यर्थः ॥ ३५ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

विनष्टदारा अकृतदाराश्च कर्मान्तराले वर्तन्ते तेषां विद्याधिकारोऽस्ति नेति विचार्य्यते । प्राप्तं तावदाश्रमिणामधिकार इति । तथा प्राप्ते विधीयते । तुशब्दोऽवधारणनिवृत्त्यर्थः । अन्तरालवर्त्तिनामपि भवत्यधिकारः तेषां दर्शनात् भीष्मरैक्वप्रभृतीनाम् ॥ ३६ ॥

## अपि स्मर्य्यते ॥ ३७ ॥

संवर्त्तप्रभृतीनामुन्मत्तचर्या ॥ ३७ ॥

## विशेषानुग्रहश्च ॥ ३८ ॥

अनाश्रमिणामपि धर्मविशेषैरहिंसासत्यवचनजपोपवासदेवताराधनादिभिरनुग्रहो विद्यायाः सम्भवति । स्मृतिश्च । अनेकजन्मसंसिद्ध इति चात्रैव जन्मनि कृतं कर्मोपकरोतीत्यभिप्रायः ॥ ३८ ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अत्रान्तरालवर्त्तित्वादितरदाश्रमवर्त्तित्वं ज्यायो वरिष्ठम् । तु शब्दो विशेषार्थः । स्वाश्रमकर्मोपयोगाद्विद्यायाः साकल्यमुपपद्यते । लिङ्गाच्च । तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चेति देवयानेन पथा गमनमाश्रमिणां दर्शयति । कथं गम्यते । ये चेमे ऽरण्य इति पञ्चाग्निविद्यायामरण्यवासिनां परिव्राजकादीनां निर्देशाच्च त्वार आश्रमा इति नियमादनाश्रमी न तिष्ठेत इति निन्दावचनादाश्रमान्तरप्रतिपत्त्यसम्भवे केन चिन्निमित्तेनापवर्गोऽयमभ्युपगम्यते । तथा चाह याज्ञवल्क्यः ।

नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ।
अतो यदात्मनो ऽपथ्यं परस्य न तदाचरेत् ॥

इतिहासे च ।

विद्यावृत्तविनीतस्य निगृहीतेन्द्रियस्य च ।
आर्ज्जवे वर्त्तमानस्य आश्रमैः किं प्रयोजनम् ॥ ३९ ॥

## तद्भूतस्य तु नातद्भावो जैमिनिरपि नियमात् तद्रूपाभावेभ्यः ॥ ४० ॥

सन्त्यूर्ध्वरेतस आश्रमा इत्युक्तं ततः प्रच्युतिरस्ति नेति विचार्य्यते । ततः प्रच्युतो नाश्रमविधुरादिवदवतिष्ठमानोऽपि दुष्यति नियमहेत्वभावादिति प्राप्त उच्यते । तद्भूतस्य प्रतिपन्नोर्ध्वरेतोभावस्य न कथं चिदप्यतद्भावः ततः प्रच्युतिः

स्यात्। कुतो नियमात्। अत्यन्तमात्मानमाचार्य्यकुले ऽवसादयन्निति। तथा चारण्यमियात्ततो न पुनरेयादाचार्य्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रममाविमोक्षात् शरीरस्य सो ऽनुतिष्ठेत यथा विधीति। यथा च ब्रह्मचर्य्यं समाप्य गृही भवेदित्यारोहस्य वचनानि दृश्यन्ते शिष्टाचाराभावात्। जैमिनिरपीत्यपिशब्देन जैमिनिबादरायणयोरप्यत्र सम्प्रतिपत्तिरिति दर्शयति ॥ ४० ॥

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥४१॥(१)

ब्रह्मचार्य्यवकीर्णी नैर्ऋतं गर्दभमालभेतेति यदाधिकारिकमधिकारलक्षणे षष्ठे ऽध्याये निरूपितं प्रायश्चित्तमवकीर्णिपशुश्च तद्यदाधानस्याप्राप्तकालत्वादिति तदपि नैष्ठिकस्य न भवति। कुतः पतनस्मरणात्। अनुमीयमानश्रुतिमूलत्वादनुमानं स्मृतिः।

आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते ततः।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महेति॥

तदयोगात्पतनस्मरणायोगात् उपकुर्वाणस्य प्रायश्चित्तम्। अपिशब्दः सम्भावनायाम्। ब्रह्मचारित्वाविशेषात्। तदुक्तं प्रमाणलक्षणे शास्त्रस्था वा तन्निमित्तत्वात्। स्मृतिरपि।

संन्यस्य दुर्मतिः कश्चित्प्रत्यापत्तिं व्रजेत्तु यः।
स चरेत्कृच्छ्रमश्रान्तः षण्मासान्प्रत्यनन्तरामिति ॥ ४१ ॥

## बहिस्तूभयथा स्मृतेराचाराच्च ॥ ४२ ॥

प्रच्यवनं महापातकं उपपातकं वा उभयथा वा बहिः कार्य्यो ऽसौ शिष्टैः स्मृतेरारूढो नैष्ठिकं धर्ममिति शिष्टाचाराच्च। न शिष्टास्तैः सह भोजनादि समाचरन्ति ॥ ४२ ॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४३ ॥

अङ्गाश्रितान्युपासनानि स्वामिनो यजमानस्य कर्त्तव्यानि किं वा ऋत्विज इति। किं युक्तम्। स्वामिनः फलश्रुतेः। वर्षति हास्मै वर्षयति च य एवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते इत्यात्रेय आचार्यो मन्यते स्म ॥ ४३ ॥

---

(१) उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥४२॥ इत्यधिकं सूत्रं शाङ्करभाष्ये दृश्यते।

## आर्त्विज्यमित्यौडुलोमिः तस्मै हि प-रिक्रीयते ॥ ४४ ॥ (१)

आर्त्विज्यमृत्विजा कर्त्तव्यमुपासनमित्यौडुलोमिर्मन्यते स्म । यतस्तस्मै साङ्गप्रधानकर्मणे कर्मकरः परिक्रीयते । ननु दीक्षा सोमस्य दक्षिणा सोमस्येति प्रधानमात्रार्थाः श्रूयन्ते । सत्यमङ्गैरक्रियमाणैरङ्गानुरक्तं प्रधानमेव कर्त्तुमशक्यमित्यर्थादङ्गार्थापि सेति प्रसङ्गलक्षणे स्थापितमङ्गप्रधानयोरेको हि प्रयोगस्तत्सिद्ध्यर्थं च ऋत्विजो व्रियन्ते । तस्मादङ्गकुर्वतां तदाश्रितं ज्ञानं कर्त्तव्यमङ्गनिर्वृत्त्यपेक्षो ऽयमुपासनाविधिः तत्प्रवृत्तं कर्त्तारमनाश्रित्यात्मानं लभते स्वयमप्रयोजकत्वात् । गोदोहनादिवत् । उद्गाता च प्रवृत्त इति स एव करोति फलं पुनर्यजमानस्यैव तदर्थत्वात् । यां वै काञ्चनाशिषमृत्विज आशासते सा सर्वा यजमानस्येति श्रुतेः । प्रापयिता ह वै कामानां किं ते काममाशानीति तस्य ह नैमिषीयाणामुद्गाता बभूव स हास्मै कामानशासदित्युद्गातृकर्तृत्वं श्रुतयो दर्शयन्ति ॥ ४४ ॥

## सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४५ ॥

तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरथ मौनं च निर्विद्याथ ब्राह्मण इति बृहदारण्यके श्रूयते । तत्रेदं चिन्त्यते । मौनं विधीयते उतानूद्यत इति । किं तावत्प्राप्तमनूद्यत इति । मौनं च ज्ञानं तच्च पाण्डित्येन गतमित्येवं प्राप्ते ब्रूमः । सहकार्य्यन्तरं विधीयत इति विधिः तृतीयं मौनं पाण्डित्यबाल्यापेक्षया तद्वतो विद्यावतः । ननु पाण्डित्यग्रहणादेव सिद्धं मौनम् । नेत्युच्यते । ज्ञानप्रकर्षपक्षेण मौनस्यापूर्वत्वात् विधिरुपपद्यते । ज्ञानप्रकर्षवाची मुनिशब्दः मुनीनामप्यहं व्यास इति दर्शनात् । अतो ऽयमर्थो ज्ञानातिशयमादाय योगाभ्यासं कुर्याज्ज्ञानपरिपा-

१ श्रुतेश्च ॥ ४६ ॥ इत्यधिकं सूत्रं शाङ्करभाष्ये दृश्यते ।

कार्येत्यर्थः । विद्यादिवद्यथा ग्निहोत्रादि अविदुषो विधीयते फलातिशयार्थिनः तथायं विदुषो व्युत्थायिनो ऽपवर्गार्थिनः संन्यासिनो नैष्ठिकस्य विधीयते ॥ ४५ ॥

### कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४६ ॥

गार्हस्थ्याद्व्युत्थानं यद्यस्ति कथं छान्दोग्ये गृहस्थेनोपसंहारः कुटुम्बस्थो देशे स्वाध्यायमधीयानो न पुनरावर्त्तत इति । तत्रोच्यते । तुशब्दो विशेषार्थः । कृत्स्नकर्मज्ञानोपसंहारात् गृहिणोपसंहरति । कृत्स्नं श्रौतं स्मार्त्तं च कर्म ब्रह्मचर्य्यमन्तकालनियमात् ज्ञानं च । कृत्स्नसाधनवतो हि साध्यं हस्तगतमित्यभिप्रायः ॥ ४६ ॥

### मौनवदितरेषामप्युपदेशात् ॥ ४७ ॥

वृत्तिभेदाद्बहुवचनं तावपि यथायोगं प्रतिपत्तव्याविति ॥ ४७ ॥

### अनाविष्कुर्वन्नन्वयात् ॥ ४८ ॥

बाल्येन तिष्ठासेदित्यत्र चिन्त्यते किं बालचरितं बाल्यं अथ जितेन्द्रियतया भावशुद्धिर्बाल्यमिति । तिष्ठन्मूत्रादिबाल्यं प्रसिद्धमिति पूर्वः पक्षः। तदुच्यते । अनाविष्कुर्वन्नन्तर्गतां चेतोवृत्तिं लोकस्याप्रख्यापयन् दण्डदर्पादिरहितो भवेत् । कस्मात् । अन्वयान्मौनेन शुद्धभावो हि मौनं योगं च कर्त्तुं योग्यो भवतीति ॥ ४८॥

### ऐहिकमप्रस्तुतं प्रतिबन्धेन दर्शनात् ॥ ४९ ॥

पाण्डित्यं च बाल्यं च निर्विद्य निश्चयेन लब्ध्वा योगमभ्यस्यतो विद्याफलं किमैहिकमाहो स्वित् आमुष्मिकमिति संशये स्यादैहिकम् । कस्मात् । दृष्टार्थत्वाद्विद्यायाः । न हि कश्चित्परत्र मे विद्या जायतामिति कामयमानो विद्यामभ्यस्येत । अतो यस्मिन् जन्मनि विद्यायां यतते तत्रैव तत्फलेन भवितव्यमिति प्राप्ते ब्रूमः । स्यादैहिकं विद्याफलं प्रस्तुतप्रतिबन्धे सति प्रसूतं प्रवृत्तं फलं कर्मदेशकालनिमित्तापेक्षया तत्कृतप्रतिबन्धाभावे यदा प्रतिबध्नन्ति स्वफलप्रसवाय लब्धावसराणि प्रवर्त्तन्ते

तदा विद्या मन्दगतिर्विच्छिन्नवेगात् कुण्ठी भवति न स्वकार्यं कर्त्तुं प्रभवति । अतो जन्मान्तरे तत्फलं कुतस्तद्दर्शनात् । श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तो ऽपि बहवो यं न विद्युः कश्चिद्धीरः प्रत्यगात्मानमैक्षदिति । स्मृतिरपि ।

अप्राप्य योगसिद्धिं च कां गतिं कृष्ण गच्छति ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिमिति ॥

अतो ऽनेकजन्माऽभ्यस्ता क्वापि जन्मन्यपवर्गं प्रापयिष्यति गुणैर्हि सत्त्वादिभिः कर्मानुसारिभिरुत्कर्षापकर्षमुपचीयमाना नौरिव तरङ्गादिभिः संसारसागरं विद्या कथं चिदतितारयतीति ॥ ४९ ॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५० ॥

एवमित्युक्ततदवस्थावधृतेः परामर्शः । साधनभूतविद्याकर्म्मोत्कर्षापकर्षापेक्षया मुक्तिरेव फलं तस्या ऽनियमो ऽमुत्रेह चेति न स्वरूपतः । कस्मात्तदवस्थावधृतेः । परमात्मावस्था हि मुक्तिरवधारिता । सा चैकरूपा । ब्रह्मविदाप्नोति परं ब्रह्माप्येति आनन्दं ब्रह्मणो विद्वान् अभयं वै जनकः प्राप्तोसीति । यदा ह्यन्योपासनाज्जनिताविद्या आरब्धानारब्धफलकर्मा दाहादाहयोः कथं वर्त्तेत इति वक्ष्यामः । द्विरभ्यासो ऽध्यायसमाप्तिद्योतनार्थः ॥ ५० ॥

इति शारीरकमीमांसाभाष्ये भगवद्भास्करप्रणीते तृतीयाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ।

# अथ चतुर्थोऽध्याय आरभ्यते।

# चतुर्थस्य प्रथमः पादः ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

तृतीये ऽध्याये परापरविद्यास्वरूपविशेषविचारो वृत्त अथेदानीं तास्वेव फलचिन्ता वर्त्तिष्यते । आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति सो ऽन्वेष्टव्यः स विजिज्ञासितव्य इति तु चिन्त्यते किं सकृत् प्रत्ययः कर्त्तव्य असकृदिति । सकृच्छ्रवणं मननं ध्यानं च कर्त्तव्यमावृत्तिप्रमाणाभावादिति प्राप्त उच्यते। प्रत्ययावृत्तिः कर्त्तव्या। कस्मात् । असकृदुपदेशात्। श्रोतव्यो मन्तव्य इति श्रवणमननयोरसकृत्क्रियमाणयोरज्ञानसंशयविपर्ययनिवर्त्तकमात्मविषयकत्वज्ञानमुत्पद्यते दृष्टार्थत्वादवहन्त्यादिवत् । यथा च मीमांसाशास्त्रेषु बहुशः श्रवणात् मननादर्थज्ञानं प्रकर्षाज्जायते तद्वत् । अपि च नात्र विसंवदितव्यं सिद्धावृत्तिरुपासनशब्दादन्तर्नीतावृत्तिवचनो ऽयं वेदे प्रयुज्यते विदिना समानार्थः । कथम् । न स वेदाकृत्स्नो ह्येष आत्मेत्येवोपासीत यस्तद्वेद स वेदसां देवतामुपास इति यो ह्यसकृदनुवृत्तिं करोति स एव मुच्यते । न हि शब्दशक्तिः पर्य्यनुयोक्तुं शक्यते । यथा शाकिर्धात्वन्तरार्थपर्यवसायात् शक्नोति वक्तुं कर्तुं चेति परिसमाप्यते। भवति च वेदादपि शब्दार्थव्युत्पत्तिः त्रिवृदादिशब्दानामिव। त्रिवृच्छन्दः स्तोत्रगतायां नवसंख्यायां प्रयुक्तः । अत्राहाभ्युपगम्यते ऽस्माभिः श्रवणमननाभ्यामसकृदनुष्ठिताभ्यां तत्त्वं पदार्थव्युत्पत्तिपुरःसरं आत्मस्वरूपविषयज्ञानं कस्य चिद्यः सकृदेव ब्रह्मात्मत्वमनुभवितुं न शक्नुयात् चित्तसंस्कारपाटवाभावात् । तथा हि छान्दोग्ये तत्त्वमसि श्वेतकेतो इत्युपदिश्य तत्तदप्रतिपत्तिकारणं निराकृत्य उपादिश्यते । यावदविद्यानुवर्त्तते ताव-

त्कर्त्तव्यमनुवर्त्तते तन्निवृत्तौ ब्रह्मीभूतस्य किं नाम कर्त्तव्यं स्यादित्युपक्रमः । सकृदेव श्रवणमनाभ्यां साक्षात्कारिज्ञानमुत्पद्यते इति वार्त्तमेतत् । श्वेतकेतोरपि यत्र बहुश्रवणमन्तरेणाज्ञानसंशयादिनिवृत्तिर्नासीत् किन्तु खलु मनुष्याणां रागादिदोषकलुषितचेतसाम् । यदप्युक्तमविद्यानिवृत्तेः कृतकृत्यतेति । तत्र भवन्तं पृच्छामः केयमविद्यानिवृत्तिराभिप्रेतेति । यावत् सकलभेदज्ञाननिवृत्तिरिष्टाऽशक्यमारब्धकर्मसामर्थ्यात् अवश्यं ताभ्यां भवितव्यम् । तदर्थमेव हि शरीरं ध्रियते । श्रुतिश्च न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति । ननु क्षेत्रधर्मत्वात्सुखदुःखयोरहं सुखी दुःखीत्याभिमानो मिथ्याप्रत्ययः । को ऽयं स्वानुभवापलापः । किं परधर्मस्य संवेदनं नोपपद्यते । यथा नीलं पीतमिति द्रव्यगुणः संवेद्यते अतो दुःखानुभवो नैव मिथ्याकारणदोषबाधकप्रत्ययाभावात् । अथ पारमेश्वरगुणानां सत्यसङ्कल्पादीनामभिव्यक्तिः सापि न दृश्यते । येनाहं मुक्तो ऽस्मीति प्रतिपद्यसे परो ऽनुमानेन जानीयात् । सा चाविद्या प्रतिपुरुषमेका वाऽनेका वेति । यद्यनेका ततो ऽर्थत्वं प्राप्नोति तत्त्वातत्त्वाभ्यामनिर्वचनीयेति हीयते । एकत्वे च युगपत्सर्वमुक्तिप्रसङ्गः । कस्य चेयमविद्या । नेश्वरस्य । विरोधात् । न जीवानाम् । तेषां अवस्तुत्वप्रतिज्ञानात् । यदप्युच्यते कस्याविद्येति पृष्टे तस्य ते ऽन्यस्त्वं पृच्छसीति तदपि चदुष्टोत्तरम् । यद्यसौ ब्रूयादहं जीवः परमात्मनो ऽश इति तदा तूष्णीमासनमेव ते । तस्मादनात्मसु देहादिषु विपरीतप्रतिपत्तिर्ब्रह्मस्वरूपा प्रतिपत्तिश्चाविद्या सा सम्यक्ज्ञानोत्पत्तौ निवर्त्तते । तच्च सम्यक्ज्ञानमुत्पन्नमिति यावज्जीवमभ्यस्यमानं परीपक्वमपवर्गक्षमं भवतीति शास्त्रादवगम्यते । ज्ञानं यद्यपि दृष्टार्थमपुनर्जन्महेतुत्वं तु केवलशास्त्रसमधिगम्यमेवान्यथा सुषुप्तिप्रलययोरिव तिरोभूताविद्याशक्तिर्मुक्तस्य पुनर्भवेत् । क्षीयन्ते चास्य कर्माणीत्यभ्यासापेक्ष्यं प्रतिवेदान्तं चोपासनं विधीयते विज्ञाय प्रज्ञां कुर्वीतेति अनुविद्यजीवी जानात्योमित्येवात्मानं ध्यायथ निचाय्य तं मृत्युमुखात्प्रमुच्यत इति । आत्मस्वरूपविषये विशेषज्ञाने वाक्यादुत्पन्ने समानप्रत्ययावृत्तिलक्षणमुपासनं यावज्जीवं कर्त्तव्यमित्यधिकरणतात्पर्यार्थः तदेतत्तत्त्वम् । श्लोकौ चात्र भवतः ।

उक्तं तत्त्वमनादृत्य दुर्ग्रहो गृह्यते यदि ।
तत्रास्माभिरिदं वाच्यं गृह्यतां गृह्यतामिति ॥
शास्त्रार्थं तत्त्वतो ज्ञात्वा चरिष्यामो वयं सदा ।
न नो व्यसनिता काचिद्भिमतिप्रतिबोधने ॥

यदप्युच्यते अनियोज्या ब्रह्मविदः शास्त्राविषयत्वादुपासनायामाश्रमकर्मणि चानधिकार इति । तदपि समयमात्रं मन्यामहे। यतो नैकजन्मनि प्रवृत्ताज्ञानस्वाभाविककर्मवासनामलप्रचयापकर्षापेक्षित्वान्मुक्तेः । भोजनशौचाचमनादिषु बुद्धिपूर्वं रागप्रयुक्तेषु वर्त्तसे । ब्रह्मीभूतश्चेत्सर्वत्रानियोज्यत्वमविशिष्टम् । शास्त्रार्थैकदेशानुष्ठानं न च प्रयुक्तम् । तथा हि ।

क्रियते कर्म किञ्चित्तु त्यज्यते किञ्चिदित्यपि ।
न लभ्यं शास्त्रमुल्लङ्घ्य स्वच्छन्दपरिकल्पनम् ॥
शौचाद्यपि न कर्त्तव्यं जीवन्मुक्त्यभिमानिना ।
नासम्बन्धाच्छरीरस्य नात्मनो नित्यशुद्धित इति ॥

यस्तु ब्रूयात्तत्त्वं पदार्थविवेके सति वाक्यार्थज्ञानमुत्पद्यत इति तदनन्तरं समस्तद्वैतप्रतिभासनाभावाच्छरीरपात इति । अत्रोच्यते । साधुपर्यालोचनं सूक्ष्मधियो भवतो द्विस्त्रिर्वा स्वयं ज्योतिर्ब्रह्माणि श्रुते तत्त्वं पदार्थव्युत्पत्तिरुपजायते । पदार्थज्ञानं च निमित्तं वाक्यार्थज्ञानस्येत्यनन्तरं तेन भवितव्यम् । यदि च पदार्थव्युत्पत्तिः श्रवणमननगुरूपासनसामग्रीसम्पत्तौ सत्यामपि नोत्पद्यते कालान्तरेऽपि का ते प्रत्याशा। आरब्धफलकर्मप्रतिबन्धान्नोत्पद्यत इति चेन्न कदाचिज्ज्ञानोत्पत्तिः सम्भवेदारब्धफलकर्मप्रतिबन्धस्यावश्यम्भावित्वाज्जीवतः प्रवृत्तिफलेन प्रतिबन्धात् मृतस्य चैतरेणेति । न च वाक्यार्थज्ञानं मृतिहेतुः । श्रुत्यभावात् । कर्मक्षयो हि तद्धेतुरविदुषां तद्दर्शनव्यासभीष्मादीनां च ब्रह्मविद्याप्रवर्त्तकानां स्मरणाद्यत्किञ्चिदेतदिति ॥ १ ॥

## लिङ्गाच्च ॥ २ ॥

इतश्च रश्मींस्त्वं पर्य्यावर्त्तयादिति रश्मिबहुत्वोपासनं बहुपुत्रतायै विधीयते इत्यत्रावृत्तिरनूद्यते, तत्सामान्यादितरेषु तथात्वं स्थालीपुलाकन्यायेन ॥ २ ॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

यो ऽयमपहतपाप्मादिगुणयुक्तः परमेश्वरः स किमहमात्मेत्येवमभेदेन प्रतिपत्तव्यः किं वान्यविषये जीवेश्वरयोर्भिन्नगुणत्वाद्भेदेन प्रतिपत्तिरिति प्राप्तावाह । आत्मेति । तुशब्दः पक्षव्यावृत्त्यर्थः । परमेश्वरप्रक्रियायां आत्मेत्येवं गच्छन्ति ज्ञापयन्ति जाबालाः । त्वं वा अहमस्मि भगवो देवते ऽहं वै त्वमसि देवते इति । ग्राहयन्ति च श्रुतय एत आत्मासर्वान्तर एष त आत्मान्तर्याम्यमृतस्तत्त्वमसीति । ननु विरुद्धगुणयोरभेदापत्तिरयुक्ता । नायं विरोधो भेदस्य नित्यसिद्धत्वात् । उपाधिकृतभेदस्तु सो ऽभेदभावनयापनीयते । अग्निसम्पर्केणेव कनकगतमलस्य ॥ ३॥

## प्रतीकेन हि सः ॥ ४ ॥

मनो ब्रह्मेत्युपासीतेत्यध्यात्माधिदैवतमाकाशो ब्रह्मेति सयो नाम ब्रह्मेत्युपास्त इत्येवमादिषु प्रतीकोपासनेषु संशयः किमात्मग्रहो ऽस्ति नेति । ब्रह्मेत्यात्मोच्यते । अस्ति च विकारेषु कारणानुगतिः तस्मादात्मग्रह इति पूर्वः पक्षः । नात्मग्रहः । प्रतीकेन हि सः । प्रतीकमात्मोपासकस्य ब्रह्मविकारत्वादुभयोस्तुल्यत्वात् । यदुक्तं कारणान्वयो ऽस्तीति । सत्यम् । वस्तुतश्चोदनातस्तु विकारस्यैवोपासनम् । यथा वासो ददात्यनो ददातीति चोदनायां न तन्तवः काष्ठानि चादीयन्ते । अत्र कल्पनारुचयः केचित्प्राथमिकश्रोत्रियश्रावकाः सिद्धान्तं ग्राहयन्तो वदन्ति नामादिप्रविलापनेन ब्रह्मैव नामादिप्रतीकेषूपास्यम् । अत्राचक्ष्महे । न पुरुषकल्पनामनुरुध्यामहे किन्तु निर्दोषश्रुतिनिर्गतां वाणीमुदीक्षामहे । यत्र विकारोपासनं वक्ति तत्र तदेवावधार्य्यते । यत्र प्रकृत्युपासनं तत्रापि तदेव नान्यत् प्रमाणान्तरमुत्प्रेक्षा वा क्रमते । मनो ब्रह्मेति चेति परो ब्रह्मशब्दः परविशेषणत्वेनैव समाप्यते । नाम च विशेष्यत्वेन द्वितीयाविभक्तियोगात् । अतो ऽयं वाक्यार्थो ब्रह्मदृष्टिविशिष्टनामोपासनं कर्त्तव्यमिति । यदि च नाम्नः प्रविलापनं न तर्हि विशेषणत्वं यथा नीलोत्पलमानयेति । अथ नाम विवक्ष्यते तस्यैवोपास्यत्वं प्रसज्यते लक्षणायाश्चापत्त्या-

यत्वात् । यदि परविद्यैवेयं भूयस्त्ववचनानुपपत्तिः स्यात् । वाग्वा व नाम्नो भूयान् भूयसीति । सूत्रञ्चेदमवाचकं पूर्वाधिकरणापवादार्थता न सिध्येत् । यदपि तैः कल्पितमपहतपाप्माहिरण्यकेशादिगुणानामुपलक्षणार्थम् । तदप्यसत् । ब्रह्मणो विशेषणत्वात्तदन्यत्वाच्च गुणानाम् । उपलक्षणं तु बहिरेव यत्रायं काको ऽदो देवदत्तस्य गृहमिति ॥ ४ ॥

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

तेष्वेवोदाहरणेषु विवक्षा किं ब्रह्मदृष्टिर्मनसि कर्त्तव्या किं वा मनो दृष्टिरितरत्रेति । नियमकारिणः कारणस्याभावादनियमे प्राप्ते ऽभिधीयते । ब्रह्मदृष्टिर्मनसि कर्त्तव्या । कस्मादुत्कर्षात् । यथा राजदृष्टिक्षत्ररीतिशब्दश्च परार्थतामापादयति एवं शब्दसामान्यार्थो ऽन्यो हीति शब्दः ॥ ५ ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

य एवासौ तपति तमुद्गीथमुपासीत लोकेषु पञ्चविधं सामोपासीत इयमेवर्गग्निः सामेत्यादिष्वनियमो नियमहेत्वभावात् । न ह्यत्रोत्कर्षापकर्षकृतो विशेषो ऽस्तीति प्राप्ते विधीयते । आदित्यादिमतयश्चोद्गीथादौ कर्त्तव्याः । कस्मादुपपत्तेः । आदित्यादिदृष्टयः कर्माङ्गद्वारेण क्रतुप्रयोगवचनेन गृह्यन्त इत्युपपद्यते अधिकृताधिकारो गोदोहनवत् । तथा लोकाः सामसु सङ्कल्पितायाः सप्तम्याः पारार्थ्यावगमात्सामोपासीतेति च साम्नो द्वितीयानिर्देशात्साम्न उपास्यत्वम् ॥ ६ ॥

## आसीनः सम्भवात् ॥ ७ ॥

क्रतुगतायामुपासनायां प्रयोगगतत्वात्तथानुष्ठीयते नामादिप्रतीकेषु । परविद्यासु दहरविद्यादिषु चिन्ता किमासीनः शयानो वा । आसीन एवेति नियमहेत्वभावादनियमः प्राप्तः । तत्राह । आसीन इति । कुतः सम्भवात् । तिष्ठतः शरीरधारणे व्यग्रं मनः शयानस्य निद्रयाभिभूयते ॥ ७ ॥

## ध्यानाच्च ॥ ८ ॥

ध्यानं चैतदुपासनं तदपि समाहिते मनस्युपपद्यते ध्यायतीव बक इति प्रयोगदर्शनात् ॥ ८ ॥

## अचलत्वं चापेक्ष्य ॥ ९ ॥

इतश्च ध्यायतीव पृथिवीत्यत्राचलत्वमपेक्ष्य ध्यायतिप्रयोगः॥९॥

## स्मरन्ति च ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मन इति सापाश्रये स्थिरासने सुखासने स्वस्तिकासने चोपविश्य निमीलितनयनो निरतिशयानन्दे परमात्मनि चित्तमावेशयेदिति ॥१०॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

दिग्देशकालेष्वनियमो यत्र देशे काले चैकाग्रता तत्रोपासनं कुर्यात् विशेषश्रवणाभावात् । ननु विशेषमपि केचिदामनन्ति । समे शुचौ शर्करावह्निवालुकावर्जिते शब्दजलाश्रयादिभिर्मनोनुकूले न चक्षुः पीडने गुहानिर्वाताश्रये वा प्रयोजयेदिति । सत्यम् । तदेवेदमुक्तं भवति ॥ ११ ॥

## आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

आवृत्तिराद्ये ऽधिकरणे स्थिता । सा किं यावज्जीवमथ किञ्चित्कालमिति संशये किञ्चित्कालं कृत्वोपरमेच्छास्त्रार्थस्य कृतत्वादिति प्राप्ते ब्रूमः । आप्रायणादामरणात्तत्रापि मरणकाले प्रत्ययावर्त्तनमग्निरहस्ये शाण्डिल्यविद्यायां श्रूयते । अथ खलु क्रतुमयो ऽयं पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैति एवं क्रतुर्ह्यमुं लोकं प्रेत्याभिसम्भवतीति । क्रतुशब्दः सङ्कल्पविशेषवचनः ॥ १२ ॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

गत उपासनाविषयः तृतीयशेषोविचारो ऽथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता वर्त्तते ब्रह्माधिगमे तद्विरुद्धफलं कर्म क्षीयते न वेति ।

न क्षीयत इति तावत्प्राप्तम् न हि कर्म क्षीयत इति स्मरणात् । अत्राभिधीयते । तदधिगमे ज्ञानलाभे सत्युत्तरपूर्वयोरघयोः पापयोरश्लेषविनाशौ पूर्वोत्पन्नस्य जन्मान्तरसञ्चितस्य । अत्रापि जन्मनि प्राक्प्रबोधादाविर्भूतस्य च विनाशो व्यपदेशात् । यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त इति । तथा क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर इति स्मरणमविद्वद्विषयम् । प्रायश्चित्तेन वा भोगेना ऽन्येषां क्षयो नान्यथेत्यागमिनः । पुनरघस्यासंश्लेषो विदुषाम् । तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति । प्रमादोत्पन्नमपि ज्ञानवतः सम्यक्दर्शनज्ञानानलसन्दग्धं कर्म नश्यतीत्याभिप्रायः ॥ १३ ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

भवतूपशमः पापस्य विरोधात् सुकृतस्य तु शास्त्रीयत्वान्न विरोधो विद्ययेति प्राप्ते विधीयते । तस्याप्यश्लेषविनाशौ स्याताम् । एवमित्यतिदेशो यथा पापस्य तथेतरस्य पुण्यस्येति भोगार्थत्वाद्विरोधो ऽविशिष्टः । उभे ह्येवैष एते तरतीति श्रुतेः । क्षीयन्ते चास्येति वा विशेषात् । नैतं सेतुमहोरात्रे तरत इति । अत्र सुकृतदुष्कृते परामृश्य सर्वे पाप्मानो ऽतो निवर्त्तन्त इत्याह । तुशब्दो ऽवधारणार्थः । शरीरपाते विदुषो मुक्तिरवश्यम्भाविनीति । द्विधामुक्तिर्जीवदवस्थायां रागद्वेषमोहैः तदङ्गैश्च मदादिभिर्विमुक्तिः पातोत्तरकालमात्यन्तिकीति ॥ १४ ॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वयोरधिकरणयोः पुण्यपापयोर्ज्ञाननिमित्तयोर्विनाशो ऽवगतः स किमविशेषणारब्धकार्ययोरनारब्धकार्ययोश्च भवत्युत विशेषेणानारब्धकार्ययोरेवेति विचार्य्यते । तत्राज्ञानशक्तेरविशेषात्तदविशेष इति पूर्वपक्षी मन्यते । तत्राचक्ष्महे । पूर्वे पापपुण्ये ऽनारब्धफले विनश्यतः न पुनः प्रवृत्तफले याभ्यामिदं ब्रह्मज्ञानायतनशरीरमारब्धम् । कथं गम्यते । तदवधेः तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ सम्पत्स्य इति । तकार-

लोपः छान्दसः । कथं पुनर्ज्ञानशक्तेर्व्यवस्था किञ्चित्कर्म क्षीयते किञ्चिन्नेति । अस्या एव श्रुतेः शक्तिव्यवस्थाऽनुमीयते । यथाग्निरभ्रपटलं न दहति इन्धनं तु दहति कोऽत्र पर्य्यनुयुज्यते । विचित्रा हि शक्तयो भावानाम् । ये पुनर्मायामात्रवादिनस्तेषामेषा व्यवस्था नोपपद्यते । कथं विद्यायामुत्पन्नायां कृत्स्ना मायाऽपास्ता यतः तथा प्रपञ्चो न कर्माणि न संस्कारा वस्तुभूता विद्यन्ते मायावादिनस्तत्र किञ्चित्कर्म क्षीयते किञ्चिन्नेति विभागो दुर्लभः । न च कुलालचक्रदृष्टान्तः सम्भवति । तत्र वेगाख्यस्य संस्कारस्य वस्तुभूतस्य चक्रमाश्रयो विद्यते नात्र संस्कारस्तदाश्रयो वा विद्यते अविद्यामात्रत्वाद्वाक्यार्थानभ्युपगमात् । द्विचन्द्रदृष्टान्तो ऽप्ययुक्तः । तत्र तिमिरस्य मिथ्याज्ञानहेतोर्वस्तुभूतस्य विद्यमानत्वात् । यदुक्तं कैश्चिद्बाधितमपि मिथ्याज्ञानं द्विचन्द्रज्ञानवत्संस्कारवशात्क्षाममनुवर्तत एवेति तदपि प्रत्युक्तं भवत्यतो भेदाभेदपक्ष एव सूत्रम् । श्रुतिश्च घटते तदवधेरिति शरीरपातावधिश्रवणादित्यर्थः ॥ १५ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

यदि तर्हि विज्ञानसामर्थ्यात् धर्माधर्मयोर्निवृत्तिराग्निहोत्रादिनित्यं कर्म विदुषा न कर्तव्यं क्रियमाणमपि तद्यदि ज्ञानेन निवर्त्यते किं कृतेनेति प्राप्ते प्रत्युच्यते । विदुषाप्यग्निहोत्रादि कर्त्तव्यमुक्तमेतत्सहकारित्वेन वेति समुच्चिताभ्यामेव ज्ञानकर्मभ्यामविद्यानिवृत्तिद्वारेणापवर्गो व्यज्यते नान्यतरेणेति । अत आह तत्कार्यायैव । ज्ञानकार्यमपवर्गः तद्दर्शनाद्यज्ञेन दानेनेति । अतो यावज्जीवमाश्रमविहितं कर्म कर्तव्यम् ॥ १६ ॥

## अतो ऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

किं विषयं पुनरश्लेषविनाशवचनं किं विषयं वाऽदो विभागवचनं एकेषा शाखिनां तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति । तत्रोत्तरम् । अतो ऽग्निहोत्रादेर्नित्यात्कर्मणो ऽन्यापि ह्यस्ति साधुकृत्या यत्काम्यकर्मफलाय क्रियते अस्ति च पापकृत्या यत्प्रतिषिद्धमाचर्यते तद्वि-

षयो ऽयमश्लेषविनाशावगमः कुतस्तद्विषयश्चैकेषां शाखिनां विनियोगः । उभयोर्जैमिनिबादरायणयोर्मतमिति । यदेव विद्येति हि सूत्रं के चिद्धीयते । तदनर्थकमित्युपेक्षणीयम् ॥ १७ ॥

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १८ ॥

आरब्धकार्ये पुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पद्यते । तुशब्दो ऽवधारणार्थः । यद्यप्यस्मिन् जन्मनि पारमेश्वरगुणा नाभिव्यज्यन्ते तथापि शास्त्रप्रामाण्यादभिव्यज्यन्ते मुक्तस्य च प्रादुर्भवन्तीति निश्चीयते ॥ १८ ॥

इति भास्करीयशारीरकभाष्ये चतुर्थाध्यायस्य
प्रथमः पादः समाप्तः ।



# अथ चतुर्थस्य द्वितीयः पादः ।

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

ब्रह्म सम्पद्यत इत्यनन्तरमुक्तं केन क्रमेणेति देवयानपन्थानमवतारयिष्यन् भ्रान्तिमेव तावन्निरूपयति जिज्ञासानिवृत्तये तदुपक्रमाच्छ्रुतेः । सा पुनः कीदृशीति निरूप्यते । यथाशास्त्रं वाङ्मनसीत्युदाहरणप्रदर्शनम् । अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणः प्राणस्तेजसि तेजः परस्यां देवतायामिति । तत्रायमर्थः सांशयिकः किं वाक् वृत्तिर्मनसि सम्पद्यते किं वागेवेति । श्रुतेर्वागिति पूर्वः पक्षो वाग्वृत्तिरिति सिद्धान्तः । कुतः । दर्शनात् प्रकृतित्वाच्च । मरणकाले वाग्वृत्तेरुपशमो दृश्यते मनो वृत्तौ स्थितायामेव । यदि पुनर्वाच एव प्रलयो वर्ण्येत किं विदुषः करणग्रामस्य ब्रह्मणि लयश्रुतिर्विरुध्येत अविदुषोऽपि देहान्तरप्रतिपत्तौ करणानुवृत्तिर्न स्यात् । वाङ्मनसीति वाक्यशब्दावृत्तौ लक्षणयावकल्पनम् । श्रुत्यसम्भवेऽपि लक्षणापि न्याय्यैव ॥ १ ॥

अत एव च सर्वाण्यनु ॥ २ ॥

अत एव दर्शनाच्छब्दाच्च वाग्वृत्तिमनुसर्वाणीन्द्रियाणि वृत्तिद्वारेण मनसि सम्पद्यन्ते । को ऽसौ । शब्दः । कस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैरिति ॥ २ ॥

तन्मनः प्राण उत्तरात् ॥ ३ ॥

उपसंहृतकरणान्तरवृत्तिकं तन्मनो वृत्तिलोपेन प्राणे सम्पद्यत इत्युत्तरवाक्यादवगन्तव्यम् । उत्तरचिन्तावतारार्थं नाशङ्का काचित् ॥ ३ ॥

सो ऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

प्राणस्तेजस्युपलीयते श्रुतत्वादिति पूर्वः पक्षः। नैतदेवम्। सो ऽध्यक्षे जीवे कार्यकरणस्वामिनि। कथमधिकाराय क्रियते। तदुपगमादिभ्यः। एवमेवेममात्मानमन्तकाले सर्वे प्राणाभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति तमुत्क्रामन्तं प्राणो ऽनूत्क्रामतीति ॥ ४ ॥

कथं तेजसीति श्रुतिरित्याह—

## भूतेष्वतः श्रुतेः ॥ ५ ॥

स जीवस्तेजःसहचरितेषु भूतेषु विशति तच्छ्रुतेः तेजःश्रुतेरित्थमवगन्तव्यम् ॥ ५ ॥

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

तेजसीति कथमेकवचनमिति चेत्। प्रदर्शनार्थं नैकस्मिन्नेव तेजसि जीवः। कुतः। श्रुतिस्मृती दर्शयतः। पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमय इति।

अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु या स्मृताः।

इति प्रतिवचने दर्शयतः। पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति। तद्व्याख्या आत्मकत्वात्तु भूयस्त्वादिति। तदिदं यावत्सूक्ष्मशरीरं सप्राणं सेन्द्रियमामुक्तिरनुवर्तते ॥ ६ ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

किं विदुष एवैषोत्क्रान्तिर्नेत्युच्यते। समाना च विद्वदविदुषो वा सृत्युपक्रमात् सृतिर्देवयानः पन्थास्तदुपक्रमात्। आङ्मर्यादायाम्। यावच्छ्रुतेरुपक्रमो मूर्द्धन्यनाडीतावत्तुल्येत्यर्थः। लिङ्गशरीरपरिवृत्तौ हृदये परिवर्तमानः प्राप्तव्यं लोकं प्रद्योतेन पश्यते अविद्वांश्चेत्पितृयानं प्रतिपद्यते नरकद्वारं वा विद्वांश्चेन्मूर्द्धन्यनाडी प्रतिपद्यते। ननु विदुष उत्क्रान्त्यनन्तरं अमृतत्वं न तस्य श्रुत्यपेक्षेति। नेत्याह। अनुपोष्यादग्ध्वात्रैव कार्यकरणं लिङ्गसंज्ञं दशान्तरं गत्वा प्राप्य अमृतत्वमुच्यते तयोर्ध्वमायन्नमृतत्वमेति ब्रह्म गमयतीति च ॥ ७ ॥

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

तेजःपरस्यां देवतायामित्यत्रात्यन्तिक एव देवतायां तावत्स्वरूपप्रलय इति प्राप्तं तत्प्रकृतित्वोपपत्तेरविदुषो ऽपीति प्राप्ते ब्रूमः । तत्सूक्ष्मशरीरं करणायतनमापीतेचराविमोक्षात्सम्यक् ज्ञाननिमित्तात् अनुवर्तते न मरणवेलायामेव विलीयते । यदि स्यात्सर्वो लोकः प्रयाणमात्रान्मुक्तः स्यात् । न चैतदिष्टं संसारव्यपदेशात् ।

योनिमन्ये प्रपद्यन्ते संसारत्वाय देहिनः ।
स्थाणुमन्ये ऽनुसंयान्ति यथाकर्म यथाश्रुतमिति ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

तल्लिङ्गशरीरं सूक्ष्मं प्रमाणतश्च सर्वगतं तथोपलब्धेः । तथाहि नाडीनिष्क्रमश्रवणादिभ्यो ऽस्य सूक्ष्मत्वमुपलभ्यते च मुष्टौ वेति ॥ ९ ॥

## नोपमर्देनातः ॥ १० ॥

स्थूलशरीरोपमर्देन दाहादिना अत एव सूक्ष्मत्वान्नोपगृह्यते तत् ॥ १० ॥

## अस्यैव चोपपत्तेरेष उष्मा ॥ ११ ॥

अस्यैव सूक्ष्मशरीरस्य सम्बन्धी यो ऽयमुष्मा जीवदवस्थायामुपलभ्यते । कस्मात् । उपपत्तेः । अस्मिन्नसति नोपपद्यते ऽयमुष्मा श्रुतेरुष्ण एव जीविष्यन् शीतो मरिष्यन्निति । तेनानुमीयते सूक्ष्मशरीरं व्यतिरिक्तमस्तीति । सङ्कोचविकाशात्मकं चेदं समः प्लुषिणेति(?) श्रुतेस्तदनुसारी जीवो न हि तस्य स्वतः सङ्कोचविकाशौ नित्यत्वात् ॥ ११ ॥

## प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ १२ ॥

अथाकामयमानो यो ऽकामो निष्काम आप्तकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्माप्येतीति शरीरादुत्क्रान्तिप्रतिषेधादामृत्युपक्रमादिति यदुक्तं तन्नोपपद्यते इति चेन्नायं विरोधः । शारीरादयमुत्क्रान्तिप्रतिषेधो न शरीरात् । कथं गम्यत इति प्रति-

ज्ञाते ऽर्थे हेतुमाह। स्पष्टो ह्येकेषां शाखिनां माध्यन्दिनानाम्। न तस्मात्प्राणा उत्क्रामन्तीति शाखान्तरे पञ्चमीप्रयोगात् शारीरात्प्राणानामुत्क्रान्तिनिषेधः स्पष्टः। षष्ठीप्रयोगे हि सम्बन्धसामान्यं प्रतीयते। यदि च शरीरादुत्क्रान्तिः प्रतिषिध्येत स उच्छ्‌वयत्याध्मायत्याध्मातो मृतः शेत इति नोपपद्येत। प्रत्यक्षविरोधश्च स्यात् विज्ञानात्मनः शारीरात् प्रतिषेधो युक्तो विवक्षितार्थोपपत्तेः। कथं कृत्वा। तमुत्क्रामन्तं प्राणो ऽनूत्क्रामतीति संसारगतिं प्रदर्श्य इति च ज्ञायमान इत्युपसंहरति। अथाकामयमान इति विदुष उत्क्रान्तिः प्रतिषिध्यते तेषां संसारावस्थायां शरीरारम्भा योत्क्रान्तिः प्राप्ता सा प्रतिषिध्यते। प्राप्तविषयत्वात् प्रतिषेधानां विदुषः' शरीरारम्भाच्चोत्क्रान्तिर्नास्ति प्राणानां तेन सहैव गच्छन्तीत्यर्थो गत्वा च परे ब्रह्मणि प्रलीयन्त इति गतिश्रुतेश्च। प्रागेव लिङ्गस्य प्रलयो नास्ति संसारमण्डलं हिरण्यगर्भपर्य्यन्तमतिक्रम्य प्रलयो भवतीति गम्यते। ज्ञानाकर्मसामर्थ्याच्च गमनसिद्धिः सेवादिलब्धग्रामफलप्राप्तिवत्। उक्तोपनिषत्काः क्व गमिष्यन्तीति च प्रश्नपूर्वकमस्यामप्युपनिषदि गतिर्दर्शिता। तस्मादत्रैव समवलीयन्त इति सूत्रार्थान्तरात्मात्रेति निर्दिश्यते इति द्रष्टव्यम्। उत्तरत्र चायमर्थो मन्त्रैः स्पष्टीक्रियते। तेन धीरा अपि यन्ति ब्रह्मविद उत्क्रम्य स्वर्गलोकमितो विमुक्ताः तेनैति ब्रह्मवित्तैजसः पुण्यकृच्चेत्यार्त्तभागप्रश्नस्य साकाङ्क्षत्वादिह परिसमाप्तिः। प्रत्यभिज्ञानादेकार्थतायुक्ता। अन्यथेदं तद्वाक्यं चानर्थकं स्यात्। ये तूत्क्रान्तिर्नास्तीति वर्णयन्ति तेषां हेतुकथनार्थं सूत्रमवाचकम्। न्यायश्च नास्ति उत्क्रान्तिं प्रतिषिध्य गतिप्रतिषेधे वाक्यभेदात्॥ १२॥

## स्मर्यते च॥ १३॥

शुको वैयासकिरादित्यमण्डलं प्राप्य स्वमहिमख्यापनं कृत्वा सर्वभूतो ऽभवदिति स्मर्यते। गत्येकदेशे सम्बन्धात् अर्चिरादीना गत इति गम्यते।

सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै।
जगाम भित्त्वा मूर्धानं दिवमित्युत्पपात ह॥

तथा चापरं स्मरणम्।
सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः।
दिवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः॥
इति मुक्तिमार्गस्य दुर्गतोच्यते। याज्ञवल्क्यो ऽप्याह।
ऊर्ध्वमेकः स्थितस्तेषां यो भित्वादित्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिमिति॥ १३॥

## तानि परे तथा ह्याह॥ १४॥

तेन ह गताः प्राणाः क समवलीयन्त इत्याह। तानि पुनरिन्द्रियाणि भूतसूक्ष्माणि च परब्रह्मविदः तस्मिन्नेव प्रलीयन्ते। कस्मात्। तथा प्राह श्रुतिरेवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति यतः प्रादुर्भूतास्तत्रैव स्वकारणे प्रलीयन्त इत्यर्थः। नान्यत्रेति मन्दविषन्यायेन भ्रान्त्यपनोदनार्थं सूत्रम्॥ १४॥

## अविभागो वचनात्॥ १५॥

तेजः परस्यां देवतायामिति यथेतरेषां बीजानां वर्षेण सम्पत्तिरेवं विदुषामपीति प्राप्त उच्यते। ब्रह्मणि कलानामविभागः स्वरूपव्यतिरेकीभावो लवणस्येव समुद्रप्राप्तौ। कथम्। वचनात्। भिद्येते चास्य नामरूपे पुरुष इति एवं प्रोच्यते स एषो ऽकलो ऽमृतो भवतीति॥ १५॥

## तदोको ऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ १६॥

तस्या इति। तस्य हृदयस्याग्रं प्रद्योतनेन प्रद्योतेनैव आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा ऽन्येभ्यः शरीरदेशेभ्य इति किं ब्रह्मविदो ऽस्त्युत्क्रमणे विशेषः किं वा नेति विचार्य्यते। तत्रानियमे प्राप्त उच्यते। ओकः स्थानं हृदयं तस्य विज्ञानात्मनः उत्क्रमिषोः स एतास्तेजो मात्राः समभ्याददानो हृदयमेवा-

नुचक्रामतीति श्रुतेरग्रज्वलनं प्रकाशनं हृदयस्याग्रज्वलनं प्रकाशनं प्राप्तव्यस्य लोकस्य मार्गं प्रकाशयति तत्प्रकाशितस्तेजस्तेनाग्रज्वलनेन प्रकाशितं द्वारं पश्यन्स विद्वान् विद्यासामर्थ्याद्विद्याङ्गभूतगत्यनुस्मरणयोगाच्च हार्देन हृदि सूपासितेन परमेश्वरेणानुगृहीतो मूर्द्धशताधिकया नाड्या निष्क्रामतीति।

शतं चैका च हृदयस्य नाड्यः तासां मूर्द्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥

हृदयादुद्गता विभास्वरा ब्रह्मनाडी अनुमूलं मूर्द्धानमेत्येव रश्मिभिरेकीभूता आदित्यमण्डलमनुप्रविष्टा तामनुशीलयतस्तयैवान्तकाले निर्गमनं भवति सो ऽयं ब्रह्मपथ उच्यते ॥ १६ ॥

## रश्म्यनुसारी ॥ १७ ॥

अत्र यत्रैतदस्माच्छरीरात् क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमत इति श्रूयते । तत्रेदं चिन्त्यते । किं अहनि मृतो रश्म्यनुसारी किं वाविशेषणाहनि रात्रौ वेति । अहनि रश्मिसम्बन्धाविच्छेदादिति पूर्वः पक्षः । विशेषाश्रुतेरुभयत्रापि यातीति पक्षान्तरम् ॥ १७॥

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ १८ ॥

निशि रात्रौ मृतस्य रश्म्यनुसारित्वं नेति चेन्न । नाडीरश्मिसम्बन्धस्य यावच्छरीरभावित्वात् । दर्शयति चामुष्मादादित्यात्प्रतायन्ते तासु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते अमुष्मिन्नादित्ये प्रविष्टा इति निदाघसमये रात्रौ रश्म्यनुगमो दृश्यते । हेमन्तरजनीषु तुषारनिकराभिवादनुपलब्धिः ॥ १८॥

## अतश्चायने ऽपि दक्षिणे ॥ १९ ॥

दक्षिणायने मृतस्य ब्रह्मप्राप्तिः स यावत्क्षिप्येत् मनस्तावदादित्यं गच्छतीति प्रतीक्षणाभावादपाक्षिकफलत्वाच्च विद्यायाः अतः पूर्वोक्तत्वादेव हेतोः । यथा निशि मृतस्य नाहः प्रतीक्षा तथा दक्षिणायने ऽप्युत्तरायणापेक्षा नास्ति । भीष्मस्य तत्प्रतीक्षासम-

रणमुत्तरायणप्रशंसार्थं कथं नाम पुण्यं चरेयुः प्राणिन इति ॥ १९ ॥

ननु यत्र काले त्वनावृत्तिमित्युपक्रम्याहरादिकालविशेषः स्मृतावनावृत्तये नियम्यते कथं रात्रौ दक्षिणायने वा प्रयतोऽनावृत्तिं यायादिति। अत्रोच्यते ।

योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २० ॥

सत्यं योगिन उद्दिश्य स्मार्ते चैते योगसांख्ये न प्रत्यक्षश्रुतिविहिते तस्मात्काले विशेषस्मृतिर्नादर्तव्या । यदा पुनरातिवाहिकोपलक्षणार्था व्याख्यायन्ते तदा न विरोधः ॥ २० ॥

इति भास्करीयब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य

द्वितीयः पादः समाप्तः ॥



# अथ चतुर्थस्य तृतीयः पादः।

अर्चिरादिना तत्प्रथितेः ॥ १ ॥

उत्क्रान्तिमारभ्य नाडीविशेषेणोत्क्रम्य रश्म्यनुसारी देवयानेन पथा ब्रह्माप्नोतीति स्थितम् इदानीं सा सृतिरेकानेकेति चिन्त्यते। श्रुत्यन्तरेष्वनेकविधागतिः श्रूयते। नाडीरश्मिसम्बन्धेनैकान्तैरेव रश्मिभिरूर्ध्वमाक्रमत इत्यर्चिरादिनैका। तेर्चिषमभिसम्भवन्ति स एनं देवयानं पन्थानमापद्याग्निहोत्रलोकमागच्छन्तीत्यन्या। यदा वै पुरुषो ऽस्माल्लोकात्प्रैति स वायुलोकमागच्छतीत्यपरा। सूर्यद्वारेणते विरजाः प्रयान्तीति चान्या। तत्र भिन्नाः सृतयो ऽन्योन्यं निरपेक्षत्वात् इति प्राप्तावुच्यते। अर्चिरादिना ब्रह्मप्रेप्सुः प्रयातीति प्रतिजानीमहे। कुतः। तत्प्रथितेः। तस्याध्वनः प्रथनात्प्रसिद्धत्वात्सर्वविदुषाम्। पञ्चाग्निविद्याप्रकरणे ये चेमे ऽरण्ये श्रद्धातप इत्युपासते इति विद्यान्तरशालिनामर्चिरादिका सृतिः श्राव्यते। अर्चिरादिमार्गेण श्रुत्यन्तरोक्तानां एकदेशानामन्तर्भावात् मार्गैकत्वसिद्धिः। प्राप्तव्यस्य चैकत्वात् अनेकमार्गकल्पनमनर्थकम्। सम्भवत्येकवाक्यत्वे वाक्यभेदश्चायुक्तस्तस्मादेको ऽयं पन्था इति स्थितम् ॥ १ ॥

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

श्रुत्यन्तरोक्तानां मार्गपर्वणां केन क्रमेण सन्निवेश इति चिन्त्यते ध्यानोपयोगात्। स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स ब्रह्मलोकमिति कौषीतकिनो ऽधीयते। तर्ह्यर्चिरादिमार्गेण गच्छतामब्दात्संवत्सरादूर्ध्वं आदित्यादर्वाक् च वायुमभिसम्भवति संवत्सराद्देवलोकं देवलोकाद्वायुलोकं इति श्रुत्यन्तरवशाद्देवलोको ऽप्यत्र मध्ये सन्निवेशयितव्यः। कस्मादविशेषाच्च। स

वायुलोकमित्यविशेषपदार्थमात्रनिर्देशात्। यथा वै पुरुषो ऽस्माल्लोकात्प्रैति स वायुलोकमागच्छति तस्मै स तत्र विजिहीते। यथा रथचक्रस्य चान्तेन स ऊर्ध्वं आक्रामत्स आदित्यमागच्छतीति विशेषः। ऊर्ध्वशब्दः क्रमवाची तेन विशेषो गम्यते ॥ २ ॥

तडितो ऽधिवरुणः सम्बन्धात् ॥ ३ ॥

आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतमिति तडितो ऽधिविद्युत ऊर्ध्वं वरुणो निवेशयितव्यो विद्युद्वरुणयोः सम्बन्धात् ॥ ३ ॥

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

किमर्चिरादयो भोगस्थानानि किं वा मार्गचिह्नानि किं वा नेतारः पुरुषा इति। पक्षद्वयव्युदासेनातिवाहिका इति प्रतिजानीमः। अतिवाहे भवा आतिवाहिकाः। तल्लिङ्गात्। आतिवाहिकवल्लिङ्गात्। चन्द्रमसो विद्युतं तत्पुरुषो ऽमानवः स एनं ब्रह्म गमयतीति नेतृत्वममानवस्य पुरुषोपसंहारे दर्शयत्यतः तत्सामर्थ्यात् उपक्रमे ऽर्चिरादिभिः शब्दैः आतिवाहिकाः पुरुषा निर्दिष्टा इति निश्चीयते। ते च मानवाः। अन्यथोपसंहारे प्राप्तमानवत्वनिवृत्त्यर्थममानव इति विशेषणं न प्रकल्पेत। गन्तॄणां च सूक्ष्मशरीरपरिवेष्टितानां स्वातन्त्र्येण गमनानुपपत्तेः। उपपत्तौ वा विभूतिविस्ताराय परेण नीयमानत्वमुक्तम्(१) ॥ ४ ॥

ननु वैद्युतादूर्ध्वं आब्रह्मप्राप्तेरमानवस्य गमयितृत्वं श्रुतं न वरुणादीनामतः कथं तेषामातिवाहिकत्वमित्याह—

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

अतो विद्युदभिसम्भवादूर्ध्वं तच्छ्रुतेः तस्यामानवस्य श्रवणात् तेनैवं विद्युतेनैव नीयन्ते विद्युदनन्तरं सम्भवतीत्यमानवो वैद्युत उच्यते। वरुणादयस्तु साधु गम्यतामिति साहित्येनोपकुर्युः। तान्वैद्युतान्पुरुषो मानव एत्य ब्रह्मलोकान् गमयतीति श्रुत्यन्तरात्। भवन्ति चात्र सङ्ग्रहश्लोकाः।

तत्प्राणाः श्रुतियुक्तिभ्यां नाड्यामूर्धन्युपागताः।

(१) उभयव्यामोहात्तत्सिद्धेः इति सूत्रमधिकं शाङ्करभाष्ये व्याख्यातम्।

त्रिपाच्छन्दे प्रलीयन्ते ह्यच्युते सर्वकारणे ॥
अनुत्क्रान्तौ स्मृतिर्न स्यादुष्मा प्राणोपलम्भनात् ।
शरीरभेदादिति च श्रूयते तैत्तिरीयके ॥
आरम्भार्था तु योत्क्रान्तिः सा नेति प्रतिषिध्यते ।
अर्थद्वयविधाने च वाक्यभेदप्रसङ्गतः ॥
लिङ्गेन वेष्टितो यायादर्चिराद्यतिवाहितः ।
लिङ्गस्य गमनादत्र गतिरस्योपदिश्यते ॥
मूर्धन्यनाड्या विनिसृत्य विद्वानारुह्य रश्मीन्भजते ऽग्निमापम् ।
अहश्च पक्षं सितमेत्य मासान्संवत्सरं देवनिकायवासम् ॥
वायुं रविं चन्द्रमसं च पश्चात्क्रमेण विद्युन्निलयं प्रयाति ।
अमानवस्तं पुरुषो ऽधिगम्य ब्रह्मात्मभावं गमयेत्सहैतैः ॥
अपामपीशेन सुरेश्वरेण प्रजाधिनाथेन च सत्कृतो ऽसौ ।
श्रुत्यन्तरालोचनयानुपूर्व्या मार्गो ऽर्चिरादिग्रथितो मयैवम् ॥
आनन्दो विरजो विमृत्युरगुणो ऽसङ्गो विपाप्मा विरुभु—
र्विज्ञप्तिः परमः पुमान्विकरणो भूतान्तरात्मा वशी ।
सर्वज्ञः परमेश्वरः स्वहृदये ध्यातो ऽनिशं यैरयम्
ते यं प्राप्य विमुक्तलिङ्गनिगडास्तद्भावभाजो ऽभयाः ॥ ५ ॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥

स एतान्ब्रह्म गमयतीति सन्दिह्यते कार्यमपरं ब्रह्म नयति किं वा परमिति । कार्यं नयतीति बादरिराचार्यो मन्यते स्म । अस्य कार्यस्य ब्रह्मणो विशिष्टदेशवर्तिनो गत्युपपत्तेः । गन्तव्यं गन्तृत्वं गतिश्चोपपद्यते ॥ ६ ॥

## विशेषितत्वाच्च ॥ ७ ॥

इतश्च ब्रह्मलोकान् गमयति । तेषु ब्रह्मलोकेषु पराः परावतो वसन्तीति बहुवचनेन विशेषितत्वात् ॥ ७ ॥

## सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥

कथं ब्रह्मशब्दो मुख्यः सन् कार्ये ब्रह्मणि हिरण्यगर्भे वर्ततेति इमामाशङ्कां तुशब्देनापवदति । परब्रह्मसामीप्याद्ब्रह्म-

शब्दव्यपदेशो लक्षणया कारणवचनः कार्ये लाक्षणिको भवति॥ ८॥

कथं पुनरेतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते तयोर्ध्वमायन्नमृतत्वमेतीति च श्रुतिरित्याह—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥

कार्यस्य ब्रह्मलोकस्यात्यये महाप्रलये सतीत्यर्थः। तदध्यक्षेण हिरण्यगर्भेण सह तत्त्वमेतीत्याभिधानात् इति ॥ ९ ॥

## स्मृतेश्च ॥ १० ॥

पुराणस्मृतेः।
ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते महात्मानः प्रविशन्ति परम्पदम् ॥
इति पूर्वः पक्षः ॥ १० ॥

## परञ्जैमिनिर्मुख्यत्वात् ॥ ११ ॥

परं ब्रह्म गमयतीति जैमिनिराचार्यो मन्यते स्म । तत्र ब्रह्मशब्दस्य मुख्यत्वात् । शब्दप्रमाणकानां यो ऽर्थः प्रतीयते स ग्रहीतव्यो गौणो लाक्षणिकश्च न शब्दनिमित्तः प्रमाणान्तरापेक्षत्वादित्यतश्च ॥ ११ ॥

## दर्शनाच्च ॥ १२ ॥

तयोर्ध्वमायन्नमृतत्वमेतीति गति पूर्विकाममृतत्वप्राप्तिं दर्शयति॥१२॥

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १३ ॥

किञ्च प्रजापतेः सभां वेश्म प्रतिपद्यत इति नायं कार्यब्रह्मविषयः प्रतिपत्त्यभिसन्धिः सम्प्राप्तिसङ्कल्पः। नामरूपयोर्निर्वहितेति परब्रह्माधिकारात्। यशो ऽहं सम्भवामि ब्राह्मणानामिति सर्वात्मनानुक्रमणादिति सिद्धान्तः। वादाविपक्षमेवात्र के चित्सिद्धान्तमाश्रित्य सगुणविद्याविषयागतिः श्रूयत इति स्थापयन्ति। कस्मात्। न हि निर्गुणब्रह्मविदो गतिरुपपद्यत इति वदन्तः। सर्वगतं हि ब्रह्म। न हि प्राप्तमेव प्राप्यते। यो हि परिच्छिन्नो ग्रामादिः स गत्या प्राप्यते। तस्मात्सगुणासु विद्यासु ग-

तिश्रुतिरिति। अत्र वेदान्तसम्प्रदायन्यायविदः परिहारं ब्रुवते। यदि निर्गुणायां गतिरनुपपन्ना सगुणास्वपि समानानुपपत्तिः। तत्रापि ब्रह्मैवोपास्यते सर्वगतस्य ये गुणास्ते गुणाः सर्वगता एव। यथाकाशस्य शब्दः परमहत्वम्। ते ऽपि चापहतपाप्मादयः संसारातिनिवृत्तिहेतवो यस्यैते स परमात्मोच्यते। यस्य ते न सन्ति स संसारी सत्त्वादिगुणयोगादित्यसाधरणा एवामी गुणाः। तत्र सगुणं ब्रह्मोपास्यमानं अब्रह्म भवति। न निर्गुणं वस्तु विद्यते। न ह्यस्ति प्रकाशादिप्रत्याख्यानेनाग्निर्नाम भवति। नापि द्रव्यप्रत्याख्याने गुणो नामास्ति। उभयात्मकं तद्वस्तु। विज्ञानमानन्दं ब्रह्म आनन्दो ब्रह्मेति शतगुणितोत्तरक्रमेणानन्दप्रतिपादनात्। यदि चैतन्यमात्रं ब्रह्म आनन्दगुणोपदेशो ऽनर्थकः स्यात्। न चाकस्मादर्थवादकल्पना। यथाश्रुतार्थग्रहणे किं नामानुपपन्नम्। अस्थूलादिश्रुतिस्तु प्रपञ्चनिकारणपरा। अयं तु स एको ब्रह्मण आनन्द इत्यसाधारणगुणोत्कर्षापकर्षरहितो व्यपदिष्टः। यदि च श्रुतं नाद्रियते अपवर्गो ऽप्यर्थवादः किं न भवति। अत एव सर्वशक्तित्वं सृष्टिकर्तृत्वमित्येते गुणाः परस्यासाधारणाः न केन चित्प्रतिषेद्धुं शक्यन्ते। गुणकृतं वा नानात्वं च दर्शितम्। तच्चास्माकं न दोषाय प्रत्युतालङ्कारो ऽभिन्नाभिन्नात्मकवस्तुरूपावगमात्। अतः सगुणब्रह्मविदो ऽपि गतिरनुपपन्ना तद्भावापत्तेः। न हि प्राप्तमेव प्राप्यत इति त्वदुक्तेनैव हेतुना तत्र गतिश्रुतयः कूपे प्रवेशयितव्याः। किञ्च संसारिणो ऽपि स्वरूपतो गतिर्नोपपद्यते तस्यापि लिङ्गशरीरगमनादेव गमनम्। ननु च संसारी जीवो नाम परमात्माभासः तस्य परिच्छिन्नत्वाद्गतिरुपपद्यते। अत्रोच्यते। को ऽयमाभासो नाम। किं वस्तुभूतो ऽथाप्यवस्तुभूत इति। यदि तावदवस्तुभूतस्य तत्त्वात् गतिरुपपद्यते स्वर्गापवर्गयोरधिकाराभावः शशविषाणवत्। अथ वस्तुभूतः सर्वगतश्चेत्यभावो ऽणुपरिमाणत्वं मध्यमपरिमाणत्वं च भवता नेष्यते। यच्चाणुत्वं तदौपाधिकमिति लिङ्गगमनादेव गमनं पूर्वोक्तमभ्युपगन्तव्यम्। न चास्माभिरियं गतिः कल्पिता। श्रुतयो ऽत्रप्रमाणम्। परविद्यासु च गतयो दृश्यन्ते। एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्तन्ते इति। तद्धेत्वं वै तादिष्टापूर्ते कृ-

तमित्युपासते ते चन्द्रमसमेव लोकं अभिजायन्त इति त एव पुनरावर्त्तते तथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमधिजयन्ते एतद्वै प्राणानामायतनं एतदमृतमभयमेतत् परायणं एतस्मान्न पुनरावर्त्तत इति प्रश्ने। मुण्डके च सूर्यद्वारेण ते विरऽजाः प्रयान्तीति। कठवल्लीषु च परविद्याप्रकरणे शतं चैका च हृदयस्य नाड्य इति। परविद्यामेव चैतरेयके श्रूयते अस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वामृतः समभवदिति। एवं तत्र तत्र गीतासु चावृत्त्यनावृत्ती विभागेनोक्ते। अमृतत्वं हि भेजिर इति पुराणे। तेषामिह न पुनरावृत्तिरिति च वाजसनेयके। इहेति विशेषणादिह कल्पेऽनावृत्तिः कल्पान्तरेऽप्यावृत्तिरिति चेन्न। श्वोभूतवदनुवादात्। यथा राजसूये ब्रह्मणो गृहं महिष्या गृहं इत्येवमादिना द्वादशहवींषि विहितानि प्रत्येकं कर्त्तव्यानीति श्वोभूते निर्वपेदित्युक्तम्। एकस्मिन्कृते पुनरपि श्वोभूत इत्युत्तिष्ठते। तद्वत् इह कल्प इह कल्पेति सर्वकल्पव्याप्तिराकृतिनिर्देशात्। अपि चेह युगे ऽवान्तरे कल्पे ऽन्यस्मिन्वेत्यध्यवसानात् आकृतिवादो युक्तः। अर्थवादसम्भवात् गृहैकत्ववत् वाक्यभेदात् पदानामावृत्तिर्विधीयते युगपत्सर्वकल्पे ऽनावृत्तिरेवोत्तिष्ठते। तत्रास्मिन्नेव कल्पे न कल्पान्तर इति अपरस्मिन्नर्थे ऽभिधीयमाने वाक्यभेदो दुर्निवारः। यथा गृहं संमार्ष्टीति संमार्गे विधीयमाने सर्वगृहेषु प्राप्तिः। तत्रैकस्येति पुनर्विधीयमाने वाक्यभेदस्तत्रापि अनावृत्तिर्न विधीयते तदानीमिहेति पदं किं विशेषणं स्यात्। तस्मादिह पदमनुवादः। अत एव काण्वानामिह पदं न पठ्यते। तस्मादर्चिरादिना गत्वा परमात्मनि लिङ्गप्रलयो न प्रागिति श्रुतिसामर्थ्यान्निश्चीयते। विद्याकर्माक्षिप्ता च गतिः संसारतरणी युज्यते सत्यलोकमतिक्रम्य कारणे ब्रह्मणि सूक्ष्मशरीरस्य करणानां च विलयः। तथा चाह परे ऽव्यये सर्व एकीभवन्तीति। पुरुषायणाः पुरुषं प्राप्यास्तं यन्तीति च। यदुक्तं ब्रह्मलोकेष्विति बहुवचनं नावकल्पते इति। तच्चोद्यं ब्रह्मणि संख्याभावान्नैकत्वं न बहुत्वं पाशबहुत्ववच्चैतद्द्रष्टव्यम्। अदितिः पाशान्प्रमुमोक्त तानिति एकस्मिन्पाशे बहुवचनं साधुत्वार्थं प्रयुज्यते। विभक्तेर्हि

द्वावर्थौ संख्याकर्मादयश्च । तत्राविवक्षितायामपि संख्यायां सप्तमी निमित्तमात्राविवक्षयावकल्पते । ब्रह्म सर्वभोगनिमित्तं सर्वप्रपञ्चनिमित्तमिति निमित्तसप्तम्येवेत्यदोषः । ये कार्यब्रह्मोपासकास्तदपेक्षया वा बहुवचनम् । यद्यत्र किञ्चिदेव सूक्ष्ममपि दूषणं केनचिदुत्प्रेक्ष्यते तत्सर्वं छान्दोग्ये विस्तरेण परिहृतमित्युपरम्यते ॥ १३ ॥

अत्र द्वौ पक्षौ दर्शयित्वा निर्णयार्थमाह ।

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा ऽदोषात्तत्क्रतुश्च ॥ १४ ॥

स एतान् ब्रह्म गमयतीति प्रतीकालम्बनान् वर्जयित्वा मनो ब्रह्मेत्युपासीतेत्येवमादिप्रतीकालम्बनान्वर्जयित्वा कार्यब्रह्मोपासकाः ये च परब्रह्मोपासकाः तानुभयप्रकारान्नयतीति बादरायण आचार्यो मन्यते स्म । कस्मात् । उभयथा ऽदोषात् । कथं न दोषस्तत्र हेतुमाह । तत्क्रतुश्च । यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति । तं यथा यथोपासत इति च श्रुतेः । परमात्मक्रतुः परमात्मानं प्रतिपद्यते कार्यब्रह्मक्रतुः कार्यम् । द्वैतैकत्वभावनया हिरण्यगर्भो भविष्यामीत्येवं प्रवृत्तस्तद्भावं तत्प्राप्त्यर्थस्यार्चिमार्गः पठ्यते । तथा च कौषीतकिना पर्य्यङ्कविद्यायां च बृहदारण्यके । ननु पञ्चाग्निविदां कथं कार्य्यब्रह्मलोकप्राप्तिः । श्रुतेः । तत्रापि विशेषण श्रूयते यः शुद्धः पूतः पुण्यलोको भवतीति । ननु पूर्वापरविरुद्धमिव प्रतिभाति । परं जैमिनिर्मुख्यत्वादिति परमेव ब्रह्मशब्दार्थ इति निश्चितम् । कार्यं ब्रह्म चेत् पञ्चाग्निविदः प्रतिपद्येरन्नावृत्तिः स्यात्तदानावृत्तिवचनं विरुद्धम् । अत्रोच्यते । नायं विरोधो द्विधा मुक्तिः सद्य एव मुक्तिः क्रममुक्तिश्चेति । ये साक्षाद्ब्रह्मैवोपासते सद्य एव मुच्येरन् । इतरे तु हिरण्यगर्भं प्राप्य शुद्धान्तःकरणाः तत्रैव ज्ञानप्रकर्षमासाद्य मायातपयोरिव ब्रह्मलोके इति विविक्तबोधोत्पत्तिसङ्कीर्त्तनात् तेन सह मुच्येरन् । ब्रह्मणा सह ते सर्वे इति स्मृतेः । अतो ब्रह्म गमयेत्यपुनरावृत्तिरिति चोभयमुपपन्नम् । तत्सामर्थ्यादेवेत्थं क्रममुक्तिराक्षिपतीत्यदोषः ॥ १४ ॥

## विशेषं च दर्शयति ॥ २५ ॥

न प्रतीकेषु ब्रह्मोपासनमस्तीत्युक्तम्। इतश्च प्रतीकोपासनेषु पूर्वस्मात्फलविशेषमुत्तरस्मिन्नुपासने दर्शयति । यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति वाग्वा व नाम्नो भूयसी यावद्वा शेषगतं तत्रास्य यथा कामचारो भवति । स चायं फलविशेषः प्रतीकतन्त्रत्वादुपपद्यते । तथा च प्रतीकालम्बनान्वर्जयित्वा इति युक्तम् ॥ २५ ॥

इति भास्करीयब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य
तृतीयः पादः समाप्तः ।

---

# अथ चतुर्थस्य चतुर्थः पादः ।

सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

उत्क्रान्तिगतिगन्तव्यनिर्णयः कृतो ऽथेदानीं गन्तव्यं प्राप्तः किमवस्थो भवतीति चिन्त्यते । एवमेवैष सम्प्रसादो ऽस्माच्छरीरात्समुत्थाय परंज्योतिरूपसम्पद्य स्वेनरूपेणाभिनिष्पद्यत इति श्रूयते । तत्र सन्देहः । किमागन्तुकेन केन चिद्रूपेणाभिनिष्पत्तिः सम्पद्यते किं वा स्वेनात्मरूपेणेति । किं पुनर्नः प्रतिभाति । आगन्तुकेनेति । कुतः । मोक्षस्यापि फलवत्त्वसिद्धेः । यथा दिव्येनाप्राकृतेन रूपेण स्वर्गफलं भुज्यते तथात्राप्यात्मरूपेण नागन्तुकेन । कस्मात् । स्वशब्दात् । अन्यथा हि स्वशब्दो ऽनर्थकः स्यात् । ननु चात्मीयवचनो ऽपि स्वशब्दः । सत्यम् । येन रूपेणाभिनिष्पद्यते तदस्यात्मीयमेवेत्यनर्थकः स्वशब्दः । तस्मादात्मरूपेणेति निश्चीयते । अभिसम्पत्तिश्चाभिव्यक्तिः ॥ १ ॥

ननु प्रागवस्थायामपि,स्वरूपमस्ति कः खल्वधुना विशेष इत्याह ।

मुक्तः प्रतिज्ञानात् ॥ २ ॥

अपहतपाप्मेत्युपक्रम्य एतं त्वेव ते भूयो ऽनुव्याख्यास्यामीति व्याख्यानात्सर्वबन्धविनिर्मुक्तो ऽयमत्र प्रतिपाद्यत इति गम्यते । स्वप्ने सुषुप्तौ चाविद्याकलुषितो जीव इह शुद्धेन परमात्मरूपेण सम्पद्यत इति विशेषः ॥ २ ॥

आत्मा प्रकरणात् ॥ ३ ॥

ननु च भौतिकं ज्योतिरत्र श्रूयते कथं मुक्त इत्युच्यते । मैवमवादीः । आत्मायं ज्योतिःशब्दः । कथम् । अयमात्मापहतपाप्मेति प्रकरणे हि सामान्यशब्दः प्रयुज्यमानः प्रकृते विशेषे ऽवतिष्ठते । यथा स्वर्गशब्दः सुषुप्तिप्रकरणे स्वर्गलोकमेतीति तद्देवा ज्योतिषां ज्योतिरायुर्होपासते इति च परात्मनि ज्योतिःशब्दप्रयोगो दृश्यते ॥ ३ ॥

## अविभागेन दृष्टत्वात् ॥ ४ ॥

स्वेन रूपेणाभिसम्पद्यमानः किं विभागेनावतिष्ठते परमात्मना विभागेनेति । तत्र पूर्वपक्षवादी मन्यते । स तत्र पर्य्येतीत्याधाराधेयभावेन व्यपदेशात् सम्पन्नसम्पत्तव्ययोश्च कर्मकर्त्तव्यापदेशात्सांख्यानामिव मुक्तो भेदेनावतिष्ठत इति । सिद्धान्ती मन्यते ऽविभागेनेति । कथम् । दृष्टत्वात् । तत्त्वमस्यहं ब्रह्मास्मि पयोदके शुद्धे शुद्धमासितुं तादृशो भवति । एवं मुनेर्विजानत आत्मा भवति गौतमेन विभागप्रतिपादकस्य शब्दस्य दृष्टत्वात् । यथा च भग्ने घटे घटाकाशो महाकाश एव भवति दृष्टत्वादेवमत्रापीति । जीवपरयोश्च स्वाभाविको ऽभेद औपाधिकस्तु भेदः स तन्निवृत्तौ निवर्तते ॥ ४ ॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

स्थितं स्वेन रूपेणाभिनिष्पद्यत इति तदिदानीं स्वरूपं चिन्त्यते । ननु चात्मस्वरूपमित्युक्तम् । तदेव न ज्ञायते सामान्येनोक्तत्वात् तद्विषयनिर्धारयिषया प्रारभ्यते । तत्रैकं मतं ब्राह्मेणात्मरूपेणापहतपाप्मादिना सत्यसङ्कल्पावसानेन । कस्मात् । उपन्यासादिभ्यः । आत्मापहतपाप्मेत्युपन्यासात् । स तत्र पर्य्येति पक्षिक्रीडं नीयमानः सर्वज्ञः सर्वशक्तिरित्यादिग्रहणं ससम्बोधो मोक्ष इति जैमिनेरभिप्रायः ॥ ५ ॥

## चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

मतान्तरमुच्यते चैतन्यसन्मात्रेणाभिनिष्पद्यते इत्यौडुलोमिर्मन्यते स्म । कुतस्तदात्मकत्वात् । चैतन्यात्मकं सत्तात्मकं च ब्रह्म यथाश्रुति एवं वा अरे अयमात्मा ऽनन्तरो ऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति । तथा सत्यं ज्ञानमनन्तं ब्रह्मेति सत्यकामादीनां तु विकल्पमात्रत्वादतत्स्वरूपतेति मन्यते । सुषुप्तवत् निःसम्बोधो मोक्ष इत्यौडुलोमेरभिप्रायः । सांख्यवैशेषिकादीनामिवेदानीन्तनानामपि केचिदेतदेवं दर्शनं प्रतिपन्नाः ॥ ६ ॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं

बादरायणः ॥ ७ ॥

एवमपि चैतन्यमात्रत्वे ऽपि पूर्वस्याप्यैश्वर्यरूपस्य भावात् । कथमुपन्यासात् । पूर्वोक्तेन जैमिनीयेन हेतुना उभयेषां वेदवाक्यानां प्रामाण्याविशेषात् । असाधारणात्वाच्चापहतपाप्मागुणानां व्यतिरिक्ताव्यतिरिक्तस्वभावत्वाददविरोधं भगवान् बादरायणः परिनिश्चिकाय । न च गुणगुणिनोरेकत्वानेकत्वविरोधः । यथाग्निरेकः सप्तजिह्वः प्रकाशवानूर्ध्वज्वलन उष्ण इति नानात्वम्, यथा च उद्यन्दिनकर एकः किरणजालं अवनिमण्डले प्रथयन्ननेको भवतीति । अत्र वैशेषिकाः प्राहुः । ससम्बोधो मोक्षो नोपपद्यते । सर्वज्ञत्वादिगुणयुक्तौ दुःखनिवृत्तिमात्रं मोक्षः । आनन्दादिशब्दाश्च दुःखनिवृत्तिमात्रालम्बिनः । यदि च सुखरागेण प्रवर्तेत ततो बन्ध एव स्यात् । रागस्य बन्धहेतुत्वात् । शरीरेन्द्रियमनसां निवृत्तौ विज्ञानोत्पत्तिहेत्वभावात् मुक्तो निःसंज्ञः पाषाणकल्पो ऽवतिष्ठते । साङ्ख्याः पुनश्चैतन्यस्वभाव आत्मा तस्य द्रष्टुः स्वरूपे चैतन्यमात्रे ऽवस्थानमसम्प्रज्ञातयोगनिष्पत्तौ मोक्ष इति मन्यन्ते । तत्राभिधीयते । यत्तावदुक्तं रागो बन्धहेतुरिति तदयुक्तम् । शास्त्रादयं विभागो गम्यते । यथा स्वदारगमनं धर्माय परदारगमनमधर्माय, तथा विषयविषयो रागो बन्धहेतुर्निरतिशयानन्दब्रह्मविषयो मुक्तये । तथा ह्यवाप्तकामाभीप्सितं न विवेशकः स्मरति । न वानन्दशब्दो दुःखाभाववचनः । शतगुणोत्तरोत्तरक्रमेण उत्कर्षापकर्षौ प्रतिपाद्य निरतिशयस्य ब्रह्मानन्दस्योपदेशात् । न चाभावस्य निरुपाख्यस्योत्कर्षापकर्षौ स्तः । लोके ऽपि दुःखतारतम्यं च परस्परविलक्षणं प्रत्यक्षेणानुभूयते । तस्मान्मुक्तः कारणात्मानं प्राप्तः तद्वदेव सर्वज्ञः सर्वशक्तिः सर्वात्माभिर्भवतीति जैमिनिबादरायणयोरभिप्रायः । ततो ये वेदबाह्या वैशेषिकाः साक्षात्तत्पक्षावलम्बिनश्च ते सर्वे ऽपसिद्धान्तिनस्तर्कमात्रशरणत्वादिति । यदि च विज्ञानमात्रं ब्रह्मानन्दपदमनर्थकं, तर्हि चैतन्यमात्रमानन्दः, दुःखावस्थायामपि चैतन्यानुवृत्तिदर्शनात् । न च दुःखनिवृत्तिमात्रमानन्दशब्दार्थ इत्युक्तम् । तस्मात्स्वयं

संविदितमेव सुखं सर्वदा मुक्तस्याभ्युपेयम् ॥ ७ ॥

## सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुपतिष्ठन्तीति श्रूयते। तत्र संशयः। किं सङ्कल्पादेव पित्रादिसमुत्थानमथ कारणान्तरमपेक्षितव्यमिति। सङ्कल्पोऽभिगमनादि च पित्रादिसमुत्थाने निमित्तं दृष्टं लोके तथा मुक्तस्येति प्राप्ते ऽभिधीयते। मुक्तस्य सङ्कल्पादेव पित्रादिसमुत्थानं न कल्प्यं हेत्वन्तरं तच्छ्रुतेः सङ्कल्पमात्रश्रुतेः। तस्याश्च प्रामाण्यादिति च शब्दो न हि लोकसामर्थ्ये युक्तं सत्यसङ्कल्पत्वान्मुक्तस्य। पित्रादिग्रहणं समस्तप्रपञ्चगतभूरिप्रदर्शनार्थम् ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव नायमबन्ध्यसङ्कल्पत्वात् मुक्तो ऽनन्याधिपतिरन्यो ऽस्याधिपतिर्नास्ति स्वतन्त्र इत्यर्थः। स सर्वेषु लोकेषु कामचारो भवतीति श्रुतेः ॥ ९ ॥

## अभावं बादरिराह ह्येवम् ॥ १० ॥

सङ्कल्पादेवेति वचनात् अमनस्तावदस्तीति अवगम्यते तत्रेदं सन्दिह्यते। किं शरीरेन्द्रियाणि मुक्तस्य सन्ति न सन्तीति। शरीरेन्द्रियाभावं बादरिराचार्यो मेने यस्मादेवमाह मनसैतान् कामान्। यस्य तु मते स एते ब्रह्मलोक इति शरीरेन्द्रियताभावे मनसेति विशेषणं नोपपद्यते ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

तयोर्भावं जैमिनिराचार्यो मेने। कुतः। अविकल्पमननात्। स एकधा भवतीति भूमविद्यायां शरीरेन्द्रियभावमन्तरेण त्रिधाभावादीनां प्रकारान्तरेणानुपपत्तेः ॥ ११ ॥

## द्वादशाहवदुभयविधं बादरायणो ऽतः ॥ १२ ॥

अत एवोभयश्रुतिसामर्थ्यात् उभयविधं बादरायण आचार्यो मेने मुक्तस्य सर्वशक्तित्वात् ऐश्वर्ययोगाच्छरी-

रोपादानमनुपादानं च स्वेच्छयोपपद्यते । द्वादशाहवदिति दृष्टान्तोपादानम् । सत्रमहीनश्च द्वादशाहं तूभयलिङ्गात् । द्वादशाहमृद्धिकामा उपेयुरिति उपायिचोदनायाः सत्रत्वं गम्यते । द्वादशाहेन प्रजाकामं याजयेदिति यजतिचोदनाया अहीनत्वम् ॥१२॥

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

स्थितमुभयविधत्वं तत्र विशेषश्चिन्त्यते । मोक्षार्थिनां प्रवृत्तिविशेषार्थं तन्वाः शरीरेन्द्रियस्याभावे केवलेन मनसा भोगः सन्ध्यवत् । यथा स्वप्ने सुखोपभोगो मनसानुभूयते । तथा ब्रह्मलोके मनसैतान्कामानिति एवमेतदुपपद्यते ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥

तनोर्भावे यथा जागरितावस्थायां स्थिराः स्थूलाः पित्रादिभोगास्तथा ब्रह्मलोके सङ्कल्पलभ्या भोगा इति ससम्बोधं मोक्षं श्रुतिसिद्धमाश्रित्याचार्येणायं विभागो दर्शितः श्रोतृणामनुग्रहाय । नानास्तिक्यमवलम्ब्य भ्रान्त्या वा सूत्राणामन्यथार्थत्वं कल्पनीयं श्रुतीनां चार्थवादत्वं सर्वत्रार्थवादत्वप्रसङ्गात् । निःसम्बोधे तु मोक्षे न प्रेक्षापूर्वकारी कश्चित्प्रवर्तते । संसारावस्थायां तावद्देवलोकादिषु पर्यायेण सुखतारतम्यं लभते । मुक्तः पुनः सुषुप्तवन्न किञ्चिच्चैतन्यं विद्यमानमप्यसत्सममेव । न हि चैतन्यान्तरेण संवेद्यते तदभावात् । न च स्वसम्विद्धिरस्तु चैतन्यम् । व्यतिरिक्तसंवित्त्यनभ्युपगमात् । अभ्युपगमे च भेदप्रसङ्गात् मायावादहानिः स्यादेव । ससम्बोधे पुनर्मोक्षे सर्वमुत्पन्नं सल्लक्षणं बोधस्वरूपं सत्सर्वज्ञं सर्वशक्तिभिन्नाभिन्नरूपं हि तद्वस्तु नातो ऽन्यथा तदवगतिरिति ॥ १४ ॥

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यदा मुक्तः सङ्कल्पमात्रसिद्धत्वात् निर्माणशरीराणि बह्न्युपादत्ते । किं तानि चेतनावन्ति समनस्थान्याहो स्वित् अचेतनान्यमनस्थानीति चिन्त्यते । तत्रैकशरीरवर्तित्वात् चेतनामनसोर्निर्माणशरीराणि तद्विरहितानीति प्राप्तम् । अथवा वैशेषिकमते पूर्वमुक्त-

मनांसि यान्यस्वामिकानि तिष्ठन्ति तान्युपादाय निर्माणशरीर-भोगाननुभवति। आत्मनः सर्वगतत्वात् इत्येवं प्राप्ते ब्रूमः। न मुक्तमनांसि कानि चिदवस्थितानि सन्तीति प्रमाणमस्ति। प्रतिषिद्धं चैतद्वैशेषिकमतं पूर्वमेव। न चामनस्कैर्निर्माणशरीरैरचेतनैर्भोगो ऽवकल्पते। अत आह प्रदीपवदावेश इति। यथा तैलवर्त्तिसंयोगभेदे तत्र तत्राविशति प्रदीपस्तथा सर्वशक्तित्वात्सर्वेषु शरीरेषु चेतनामनसोः सद्भावः। स्वयं तावदात्मा मुक्तः सर्वगतः अणुत्वमौपाधिकं संसारावस्थायामुत्क्रान्तिगतिसामर्थ्यादभ्युपगतम्। यद्यप्यणुत्वमथेदानीमभ्युपगम्य एकशरीरवर्तित्वं कल्प्यते तथापि सर्वशक्तित्वात्सत्यसङ्कल्पत्वात् निर्माणशरीरेषु भोगसंवित्तिलक्षणा चेतना तत्साधनभूतानि च मनांसि प्रादुर्भवन्तीत्यविरोधः। तथा हि दर्शयति शास्त्रं स एकधा भवति पञ्चधा भवति सप्तधेति ॥ १५॥

ननु मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्य्यं वारयति प्रतिश्रुतिः ऐश्वर्यं सर्वज्ञतां वा मुक्तस्य वारयति—

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

कथं स्वाप्ययः सुषुप्तं स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षत इति सम्पत्तिरुत्क्रमतः तेजःपरस्यां देवतायामिति विज्ञानघन एवैतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति तयोरन्यतरापेक्ष्यं विशेषणविज्ञानवारणश्रवणं न मुक्तस्य समस्तवस्तुविषयासामान्यज्ञानं निवार्य्यते। कथमवगम्यते। यतस्तत एवैतदधिकारवशादाविष्कृतमेवैतेभ्यः समुत्थायेति शरीरेन्द्रियविषयनिबन्धनं न प्रेत्यंति विशेषविज्ञानं प्रतिषिध्यते। यत्पुनः परभावस्य विद्याकर्मसामर्थ्यात्सर्वाविषयं सामान्यज्ञानमाविर्भूतं न तस्य सुप्तावस्थायामभावो व्यपादिश्यत इत्यदोषः ॥ १६ ॥

जगद्व्यापारवर्ज्जं प्रकरणादसंन्निहितत्वाच्च ॥ १७ ॥

स्थितमेतत्स्वमतविभागेन दृष्टत्वादित्यारभ्य परमकारणे सायुज्यं गतानां च निरवधिकमैश्वर्य्यमिति। ये पुनर्वेदान्ते मुक्ताः पृथगवतिष्ठन्त इति तन्मतमभ्युपगम्य सावधिकमैश्वर्य्यं तेषा-

मपि प्रतिपादयितुमधिकरणमारभ्यते । जगद्व्यापारमैश्वर्य्ययुक्तानामभ्युपगम्यते । जगद्व्यापारस्त्वनादिसिद्धस्येश्वरस्य कथं गम्यते । प्रकरणात् । सदेव सोम्येदमिति हि प्रकृत्य सृष्टिरुच्यते असन्निहितत्वात् चेतरेषामुपासा हि परमात्मानं सृष्टिकर्तारमभिव्यज्यते तेषां सन्निधिरस्ति । तस्मादितरेषामैश्वर्य्यं सावच्छेदं परमेश्वरानुविधायीति स्थितम् ॥ १७ ॥

## प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥

अधिकारे लोकानुग्रहव्यापारे प्रवृत्तं यत्सवितृमण्डलं तदवस्थितेश्वरायत्तमेवेदमैश्वर्य्यमुच्यते न स्वतन्त्रम् । स्वरित्यादित्ये महरिति ब्रह्मणीत्युक्त्वा प्राप्नोति स्वाराज्यमित्युच्यते । तस्मात्तदपेक्षमैश्वर्य्यमणिमादिलक्षणं न जगद्व्यापारविषयम् । अत एवाहाप्नोति मनसस्पतिमिति । सर्वमनसां यः पतिस्तमाप्नोतीत्यर्थः । तत्प्राप्तिपुरःसरं चेदमैश्वर्य्यमितरेषां श्राव्यते । विकारवर्त्तित्वं कथं गम्यते । वाक्यशेषात् । चक्षुःपतिः श्रोत्रपतिर्विज्ञानपतिरिति ॥ १८ ॥

## विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

पारमेश्वरं पुनरैश्वर्य्यं नित्यसिद्धं विकारावर्ति स्वमहिमवर्तिचशब्दाद्विकारवर्ति । तथाह्युभयविधां स्थितिमाहाम्नायः तावानस्य महिमा त्रिपादस्यामृतं दिवीति । कार्यब्रह्मलोकवर्तिनां मुक्तानां सङ्कल्पादेवेति श्रुतिः । तदैरम्मदीयं सरः तदश्वस्य सामसवनामिति बहुविधमैश्वर्य्यं प्रकीर्त्य तत्रेश्वरायत्तमित्युपपन्नम् ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

विकारावर्तित्वं परस्य ज्योतिषः तदनुग्राहकत्वं च प्रत्यक्षानुमाने श्रुतिस्मृती दर्शयतः । न तत्र सूर्यो भाति न चन्द्रतारकमिति । न तद्भासयते सूर्यो न शशाङ्को न पावक इति ॥ २० ॥

## भोगमात्रसाम्यं लिङ्गाच्च ॥ २१ ॥

इतश्च न निरङ्कुशं मुक्तानामैश्वर्य्यं यस्माद्भोग्यसाम्यमेषामनादिसिद्धेनेश्वरेण श्रूयते । ब्रह्मविदाप्नोति परं इत्युपक्रम्य सो-

ऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चित्तेन किमनेन ग्रहेणोक्तम् । पारमेश्वराधीनमेवैषामैश्वर्य्यं न स्वातन्त्र्यमिति ॥ २१ ॥

नन्वेवं सति सातिशयत्वात् पक्षे पुनरावृत्तिर्विकारप्रलये हि तदाश्रितस्यैश्वर्य्यस्य प्रलयः स्यादतो ऽनावृत्तिर्विभागपक्षो ऽवकल्पते । ननु वचनादनावृत्तिः स्यात् । न शक्यते वचनशतेनापि वस्तुतत्त्वमन्यथाकर्तुं मनसैतान्कर्मान् ब्रह्म गमयतीति च प्राप्तिपरा न भेदप्रतिपादनपरा इति मत्वाह भगवान् बादरायणः—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

ये नाम के चिदर्चिरादिमार्गेण कार्यब्रह्मलोकं हिरण्यगर्भं प्राप्तास्तदुपासका ये च ये च साक्षात्परमात्मानं प्राप्तुं स्थितास्तदाराधनतत्पराः तेषां सर्वेषामनावृत्तिः । कथमवगम्यते । शब्दात् । यतयोर्ध्वमायन्नमृतत्वमेति तेषामपुनरावृत्तिः, एतेन प्रतिपद्यमान इमं मानवमावर्तं नावर्तत इति ते इमं तद्ब्रह्मलोकमभिसम्पद्यन्ते न च पुनरावर्तन्ते इति संवत्सरचक्रं सूर्यमण्डलं वैराजशरीरं तत्र सर्वे लोकाः सर्वे वेदा देवाः सन्निविष्टाः । तथाहि मन्त्रवर्णे पञ्चारे चक्रे परिवर्तमाने तस्मिन् स्थिता भुवनानि विश्वेति तदन्तरात्मानं प्रथमं प्राप्य ततः परमात्मानं प्रतिपद्य तेनैकीभूतास्तस्मिन् ब्रह्मणि मोदन्त इति ॥ २२ ॥

इति श्रीभगवद्भास्कराचार्यप्रणीते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ॥

समाप्तश्चायं ग्रन्थः ॥

—:○:—

